PARLE

चुप्पक्क चक्क
चँ...नकचक्क
चिश्श ट्वीश नक?





गोली
मस्त
बोली




mango
bite

अपने मुंह में रखिए मैंगोबाइट की एक गोली,
और शुरू कीजिए बोलना मैंगोबाइट की बोली.

वर्षद्वयं यावत् भवद्भ्यः ज्ञानम्
आनन्दं च दत्तवती पौराणिककथा

# विघ्नेश्वरः

एतस्मिन् अङ्के समाप्तिं गच्छन्ती अस्ति ।





अग्रिमात् अङ्कात् रसमयेन
कथावस्तुना मनोहरैः चित्रैः च
सर्वान् मन्त्रमुग्धान् कर्तुम् अर्हा
पौराणिकी धारावाहिनी

# विष्णुपुराणम्

आरप्स्यते ।




स्वनिमित्तं प्रतिकृतिः (जनवरी २००४)
आरक्ष्यताम् अद्यैव ।



# एतस्य अङ्कस्य विशेषाः

सम्पुटः - २१ डिसेम्बर् - २००३ सञ्चिका - ९



मायासरोवरः
१३



शन्तनोः निर्णयः
(वेतालकथा)
१९



पुराणकथावली
२६



विघ्नेश्वरः - २४
४५

## अन्तरङ्गम्


★ निशायां शब्दः ...६
★ मैत्री शत्रुता च ...१५
★ शन्तनोः निर्णयः ...१९
★ आत्मना सह युद्धम् ...२६
★ वार्ताविशेषः ...३३
★ पिशाचीनां सम्पत् ...४०
★ विघ्नेश्वरः - २४ ...४५
★ कथाकारः ...५५
★ सत्यस्वराज्ययोः ...६३
★ चित्रशीर्षिकास्पर्धा ...६६
★ गजराजस्य निर्णयः ...७
★ मायासरोवरः - २१ ...१३
★ भारतदर्शनम् ...२५
★ अपूर्वः प्रश्नः ...२९
★ अब्दुलस्य सौभाग्यम् ...३४
★ भारतम् अवगम्यताम् ...४४
★ भार्गवस्य तपस्या ...५१
★ आर्यः - ४ (चित्रकथा) ...५९
★ कालोऽयं विनोदस्य ...६४



SUBSCRIPTION

For USA and Canada
Single copy $2
Annual subscription $20
*Remittances in favour of Chandmama India Ltd.*
to
Subscription Division
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

Gift Subscriptions
By Air Mail to All Countries other than India
Twelve issues Rs. 900 Within India Rs. 120
by book post
Send your remittances by Demand
Draft or Money Order favouring
'Chandamama India Limited'



संस्थापकौ -
चक्रपाणिः नागिरेड्डी च

# क्रीडानां प्रायोजकत्वम्

१०५१ तमे वर्षे प्रवृत्तायाम् एशियन्क्रीडास्पर्धायां भारतेन प्राथम्यं प्राप्तम् आसीत् । १९८२ तमे वर्षे भारतेन अष्टमम् 'एशियाड्' व्यवस्थापितम् । केभ्यश्चित् एव दिनेभ्यः पूर्वं हैदराबादनगरे प्रथमा आफ्रो-एशियन्स्पर्धा समाप्ता । एतस्मात् उभयोः भूखण्डयोः स्थितानां देशानां सामीप्यं प्रवृद्धम्, येन तत्र वसतां सर्वेषां हितं सिध्येत् ।

एतादृशीषु अन्ताराष्ट्रियासु स्पर्धासु भारतीयैः यः गुणस्तरः प्रदर्शितः तस्मात् जनेषु, तत्रापि युवसु, एतादृशीषु स्पर्धासु भागवहने उत्साहः प्रवृद्धः दृश्यते । सर्वकाराः अपि स्पर्धानां क्रीडापटूनां च निमित्तं धनव्ययं कर्तुं समुत्सुकाः दृश्यन्ते । बहुराष्ट्रीयाः संस्थाः अवगतवत्यः सन्ति यत् क्रीडानां, क्रीडापटूनां च प्रायोजकत्वस्य स्वीकारात् आत्मना निर्मितानां वस्तूनां प्रचारः अधिकः भवति इति ।

एषा प्रवृत्तिः निश्चयेन अस्ति सन्तोषावहा । किन्तु अत्र चिन्तनीयोऽपि कश्चन अंशः अस्ति । धनाढ्याः उद्यमसंस्थाः सर्वविधानां क्रीडानां प्रायोजकत्वस्वीकारे न समुत्सुकाः । यस्मात् अधिकः लाभः, अधिकः प्रचारः च स्यात् तत्रैव तासां दृष्टिः । अतः क्रीडाक्षेत्रस्य सर्वतोमुखः विकासः, आरोग्यकरी वृद्धिः च जायमाना नास्ति । एषः तु खेदस्य विषयः ।

क्रीडाः आरोग्यवर्धने उपकारिकाः । देशस्य स्वास्थ्यवर्धने अपि सहायिकाः ताः । अतः एतस्मिन् क्षेत्रे धनस्य विनियोगः समानतया भवेत् । तेन महता प्रमाणेन क्रीडापटवः प्रशिक्षिताः अग्रगामिनः च भवेयुः । तदा एव अल्पजनप्रियानाम् अपि क्रीडानाम् अभ्यर्थिनः २००४ तमे ओलम्पिक्वर्षे उत्तमं पटुत्वं प्रदर्शयितुम् अर्हेयुः ।

*सम्पादकः* - **विश्वम्**







# निशायां शब्दः

अट्टद्वययुक्तं भवनं भाटकार्थं दत्तम् आसीत् । तस्य अधः रामदासनामकः कश्चन ज्येष्ठः ग्रन्थपालकः वसति स्म । तदुपरि कश्चन युवा वणिक् रमेशः वसति स्म । उभौ अपि एकाकिनौ एव ।

रामदासः सर्वदा साक्षात् नववादने शेते स्म । किन्तु रमेशस्य गृहागमनमेव सार्धनववादने । तस्य शयनप्रकोष्ठः रामदासस्य शयनप्रकोष्ठस्य उपरि एव आसीत् । रमेशस्य पादत्राणयुक्तयोः पादयोः स्थापनस्य शब्दात् रामदासः प्रतिदिनं जागरितः भवति स्म । रमेशस्य अपरः अभ्यासः अपि आसीत्, यश्च रामदासं नितरां पीडयति स्म । रमेशः मञ्चे उपविश्य आदौ एकं पादत्राणम् अपनीय प्रकोष्ठस्य कोणे बलात् क्षिपति स्म । तदा कर्णकठोरः शब्दः श्रूयते स्म । स च पादत्राणपातनशब्दः तडिदाघातः इव भासते स्म रामदासस्य दृष्ट्या । किञ्चित्समयानन्तरं रमेशः द्वितीयं पादत्राणं निष्कास्य पुनरपि यथापूर्वं प्रकोष्ठस्य कोणे क्षिपति स्म । एवं प्रवर्तते स्म प्रतिदिनम् अपि ।

पादत्राणयोः शब्दात् दासः अतीव भीतः भवति स्म । गच्छता कालेन तादृशी परिस्थितिः निर्मिता अभवत् यत् यावत् पादत्राणयोः क्षेपणस्य शब्दः न श्रूयते तावत् रामदासः निद्राम् एव न प्राप्नोति स्म ।

एकदा सः रमेशेन मिलित्वा आत्मनः निद्राभङ्गः कथं भवन् अस्ति इति उक्तवान् । तदा रमेशः क्षमां याचित्वा – 'इतःपरं जागरूकतया भविष्यामि' इति सूचितवान् ।

तस्यां रात्रौ रमेशः मञ्चे उपविश्य यथापूर्वं पादत्राणमेकं क्षिप्तवान् । तावता रामदासाय आत्मना दत्तं वाग्दानं तेन स्मृतम् । अतः सः द्वितीयं पादत्राणं विना शब्दं भूमौ स्थापितवान्, अल्पे एव काले निद्रितवान् च । मध्यरात्रे द्वारताडनशब्दः तेन श्रुतः । झटिति जागरितेन तेन उत्थाय द्वारम् उद्घाट्य यदा दृष्टं तदा तस्य पुरतः दिग्भ्रान्तः रामदासः स्थितः आसीत् ।

''किं भोः ? किं जातम् ?'' इति आश्चर्येण पृष्टवान् रमेशः ।

तदा रामदासः उक्तवान् – ''भोः ! भवान् कृपया अन्यत् पादत्राणम् अपि शीघ्रं क्षिपतु । अन्यथा तस्य पातनप्रतीक्षातः उद्विग्नेन मया निद्रा सर्वथा न प्राप्यते'' इति ।



# गजराजस्य निर्णयः

महासमुद्रे घनारण्येन पर्वतैः च उपेतः कश्चन द्वीपः आसीत् । तत्रत्ये अरण्ये विविधाः जन्तवः वसन्ति स्म । अरण्ये मानवानां प्रवेशः न आसीत् । सर्वे सम्भूय गजराजम् ऐरावतं स्वनायकत्वेन चितवन्तः ।

ऐरावतः अतिशयबलशाली महाबुद्धिमान् च । प्रतिदिनं समुद्रतीरे सभा प्रवर्तते स्म । पारस्परिककलहानां निवारणं भवति स्म तत्र ।

द्वीपं परितः स्थिते समुद्रे काचित् जलकन्या निवसति स्म । तस्याः कटिभागात् अधः मीनाकारता । ऊर्ध्वं च स्त्रीशरीरम् । सा तदा तदा समुद्रात् आगत्य सर्वैः जन्तुभिः सह स्नेहेन व्यवहरति स्म । कदाचित् ऐरावतस्य सभायाम् अपि उपस्थिता भवति स्म ।

कदाचित् सायङ्काले सभा प्रचलन्ती आसीत् । तदा उभौ वृकौ व्रणितं कञ्चित् अजशिशुं तत्र आनीतवन्तौ, गजराजस्य पुरतः स्थापितवन्तौ च । ऐरावतः अजशिशुं सकृत् करुणया दृष्ट्वा तौ वृकौ अपृच्छत् – ''कस्मिन् विषये विवादः भवतोः ?'' इति ।

तदा कृष्णवर्णीयः वृकः अवदत् – ''एषः अजशिशुः मम आहारः'' इति ।

''राजन् ! एषः अजशिशुः स्वस्य मात्रा सह आसीत् । अहं छद्मव्यवहारेण तं मातुः पृथक्कृत्य दूरं नीतवान् । तदभ्यन्तरे एषः कुतश्चित् आगत्य वदति यत् एषः अजः मम आहारः इति'' इति अवदत् अपरः वृकः ।

उभयोः अपि वादं श्रुत्वा ऐरावतः क्षणकालं चिन्तनं कृतवान् । किञ्चित्कालानन्तरं सः तौ उक्तवान् – ''भवन्तौ तस्य नारिकेलवृक्षस्य समीपं गच्छताम् । परस्परं समालोच्य निर्णयतां यत् कस्य व्यवहारः न्यायोचितः इति । तदनन्तरं मया मम निर्णयः श्राव्यते'' इति ।

तौ उभौ अपि नारिकेलस्य समीपं गतवन्तौ । किञ्चित्कालं चिन्तनं कृत्वा प्रत्यागत्य उभौ अपि उक्तवन्तौ – ''ममैव कथनं न्यायसम्मतम् अस्ति'' इति ।

तदा ऐरावतः कृष्णं वृकम् उद्दिश्य अवदत्

- ''अन्धकारकाले छद्मवेषेण गत्वा वञ्चनया भवता अजशिशुः अन्यत्र नीतः । एषः वृकव्यवहारविरुद्धः । एतस्य अपराधस्य निमित्तं भवता सप्ताहं यावत् अन्धकारमय्यां गुहायां बन्दीत्वेन स्थातव्यम्'' इति ।

एतं निर्णयं श्रुत्वा उभौ व्याघ्रौ उत्थाय आगत्य तं वृकं गुहां प्रति नीतवन्तौ ।

एतस्य दर्शनात् अपरः वृकः अचिन्तयत् यत् निर्णयः मदनुकूलः एव भविष्यति इति ।

तदा ऐरावतः तम् उद्दिश्य अवदत् - ''मातुः पृथग्भूतः अजशिशुः भवतः आहारः भवितुं नार्हति । असहायम् अजशिशुं स्वस्य आहारं वदता भवता सर्वथा अनुचितं कृतम् । एतस्य मातुः समीपं प्रापणं भवतः कर्तव्यम् । यदि अत्र लोपः क्रियेत तर्हि भवता आजीवनं कारागारवासः प्राप्येत'' इति ।

जलकन्या एतत्सर्वं कुतूहलेन पश्यन्ती आसीत् । सा गजराजं नमस्कृत्य अवदत् - ''गजराज ! भवतः निर्णयविषये मम कश्चन प्रश्नः अस्ति'' इति ।

''कामं पृच्छतु'' इति अवदत् गजराजः ।

''उभौ अपि वृकौ वदन्तौ आस्तां यत् सः अजशिशुः मम इति । किन्तु भवता उभयोः अपि वादः निराकृतः, स्वस्य निर्णयः श्रावितः च । बलवान् दुर्बलस्य संहारं करोति इति तु वन्यजीवने सहजम् । एवं स्थिते अजशिशोः ग्रहणं कथम् अपराधाय भवेत् ?'' इति अपृच्छत् जलकन्या ।

ऐरावतः अवदत् - ''मृगयया आहारसम्पादनं वन्यमृगाणां कर्तव्यम् इति अहम् अङ्गीकरोमि । किन्तु तत् अरण्ये एव करणीयम् । अरण्यात् बहिः गत्वा यदि ते एवम् आहाराय वञ्चनामार्गेण प्रयासं कुर्युः तर्हि बह्व्यः समस्याः उत्पन्नाः भवेयुः । अन्ततो गत्वा वन्यजीविनां हानिः एव भवेत् । यदि मानवः वन्यजीविनां संहाराय उद्युक्तः भवेत् तर्हि सर्वेषां जीवनम् अपायग्रस्तं भवेत् । अतः अस्माभिः अस्मत्सीमाम् अवगत्य व्यवहरणीयम् । एतम् अंशं मनसि निधाय मया निर्णयः कृतः'' इति ।

एतत् श्रुत्वा सन्तुष्टा जलकन्या - ''गजराज ! भवतः बुद्धिमत्ता असदृशी । भवतः चिन्तनं योग्यम् अस्ति'' इति उक्त्वा गजराजं नमस्कृत्य समुद्रे अदृश्यतां गता ।





# मैत्री शत्रुता च

महानन्दनामकः राजास्थाने उन्नताधिकारी आसीत् । सः अहङ्कारी स्वार्थी च । कदाचित् सः मध्याह्ने राजमार्गे पादाभ्यां गच्छन् आसीत् । तदा तस्य पादरक्षा छिन्ना । सः तां हस्तेन गृहीत्वा अनतिदूरे स्थितस्य वृक्षस्य समीपं गतवान् ।

तस्य वृक्षस्य अधोभागे कश्चन उपविष्टः आसीत् । सः विनोदनामकः महानन्दस्य मित्रमेव । उभौ अपि पूर्वं सहपाठिनौ आस्ताम् कस्मिंश्चित् गुरुकुले । महानन्दः भाग्यवशात् उन्नतां पदवीं प्राप्तवान् आसीत् । किन्तु विनोदः दरिद्रः सन् जीवने कष्टम् अनुभवति स्म ।

सः महानन्दं दृष्ट्वा – ''आगच्छतु मित्र ! भवन्तं दृष्टवतः मम बहूनि वर्षाणि अतीतानि'' इति उक्तवान् ।

विनोदस्य वेषादिकं दारिद्र्यसूचकम् आसीत् । 'एतादृशः मां मित्र इति कथयति किल !' इति चिन्तयतः महानन्दस्य कोपः आगतः । सः तीक्ष्णेन स्वरेण विनोदम् उक्तवान् – ''भवान् कः? अहं राजास्थाने उन्नतः अधिकारी अस्मि इति भवान् जानाति किम् ? मां मित्रम् इति आह्वातुं भवतः कियत् धैर्यम् !'' इति ।

किन्तु विनोदः हसन् एव – ''एकः एव वृक्षः आवयोः उभयोः अपि आश्रयः आसीत् । अत एव अहं भवन्तं मित्र इति आहूतवान्'' इति उक्तवान् ।

''मैत्रीं छाया न द्योतयति, अपि तु वस्त्राणि द्योतयन्ति । एकवारं मया धृतानि वस्त्राणि पश्यतु, तथैव आत्मना धृतानि अपि'' इति व्यङ्ग्यवचसा एव तं सूचितवान् महानन्दः ।

तदा विनोदः हसन् एव उक्तवान् – ''मित्र ! वस्त्रमेव व्यक्तेः योग्यताद्योतकं न । गुणाः खलु पूजास्थानम् ? इदानीं घर्मः महान्



अस्ति । स्वेदः अपि स्रवन् अस्ति । तथापि सम्पत्तिप्रदर्शनाय भवान् स्वशरीरं वस्त्रेण पूर्णतया आच्छादितवान् अस्ति । एतादृशं भवन्तं दृष्ट्वा मयि दया उत्पन्ना । दया अपि मित्रस्य विषये एव किल प्रादुर्भवति ? अतः एव मया मित्र इति सम्बोधितम्'' इति ।

महानन्दः कोपेन ज्वलन् रूक्षस्वरेण पुनः उक्तवान् - ''अप्रयोजकानि एतादृशानि वचनानि मयि कमपि परिणामं न जनयन्ति । मया क्रियमाणं भोजनं जीवने एकवारं वा भवता दृष्टं किम् ?'' इति ।

''प्रतिदिनं यदि भूरिभोजनं क्रियते तर्हि तदेव भोजनं सामान्यं भवति । अत एव स्वादु भोजनम् उत्सवेषु, पर्वसु चैव क्रियते । अहमपि तदा तदा भूरिभोजनं करोमि । अत एव तादृशं भोजनं मह्यं बहु रोचते । भवता कदापि तादृशः आनन्दः न अनुभूतः इति मन्ये यथा मया भोजनेन आनन्दः प्राप्यते'' इति महानन्दम् उक्तवान् विनोदः ।

विनोदस्य अनेन वचनेन नितरां कुपितः महानन्दः झटिति तद् पादरक्षायुगलं हस्तेन गृहीत्वा राजमार्गेण प्रस्थितः । किन्तु महतः आतपस्य कारणात् सः चलितुं न शक्तः । अतः पुनः वृक्षसमीपमेव आगतः ।

तदा विनोदः उक्तवान् - ''अहो ! कियत् सुन्दरं दृश्यम् ! मित्र, यत् वस्तु अस्मान् नयति तत् वस्तु अपि कदाचित् अस्माभिः नेतव्यं भवति । गुरोः एतत् वचनं भवता विस्मृतं किम् ? एतावन्ति दिनानि पादरक्षा भवन्तम् अवहत् । अद्य भवता सा उह्यते'' इति ।

महानन्दः इतोऽपि अधिककालं तत्र स्थातुं न शक्तः । आतपकारणतः जायमानं पादतापम् अपि अगणयन् सः ततः प्रस्थितः एव । गृहं गत्वा नूतनां पादरक्षां धृत्वा सः राजास्थानं गतः । तत्र मिलितः राजगुप्तः उक्तवान् - ''मित्र ! अद्य शुभदिनम्'' इति ।

राजगुप्तः अपि महानन्दस्य मित्रम् । महानन्दविनोदाभ्यां यस्मिन् गुरुकुले पठितम् आसीत् तस्मिन् एव राजगुप्तोऽपि पठितवान् आसीत् । राजगुप्तः जन्मना धनिकः । सः उन्नतं शिक्षणं प्राप्य राजास्थाने उन्नतं पदमपि प्राप्तवान् आसीत् । एषः राजास्थाने महानन्दस्य अपेक्षया उन्नताधिकारे आसीत् । तथापि महानन्देन सह तस्य व्यवहारः सौजन्यपूर्णः प्रीतियुक्तः च भवति स्म ।

महानन्दः राजगुप्तस्य वचनं श्रुत्वा सोत्साहम् उक्तवान् - ''अद्यतनं दिनं भवतः

शुभदिनं चेत् ममापि शुभदिनमेव । किन्तु तस्य कारणं किम् इति मया न ज्ञातम्'' इति ।

''महाराजाय अद्य मया काचन सूचना दत्ता । तेन नितरां सन्तुष्टः राजा यत् इच्छति तत् प्रार्थयतु इति माम् उक्तवान् । अहं मम बाल्यमित्राय विनोदाय एकम् उद्योगं प्रार्थितवान् । राज्ञा तत् अङ्गीकृतम् । अत एव अद्य शुभदिनम् इति मया उक्तम्'' इति सानन्दम् उक्तवान् राजगुप्तः ।

एतत् श्रुतवतः महानन्दस्य मुखं विवर्णं जातम् । तेन उक्तम् - ''तादृशाय अहङ्कारिणे भवता उद्योगः दापितः किम् ? एतत् न उचितम् । यदि तेन अत्र उद्योगः प्राप्येत तर्हि भवतः अपकीर्तिः स्यात्'' इति ।

''भवान् किं वदन् अस्ति मित्र ! विनोदः किम् अहङ्कारी ? बाल्यतः आवयोः वचनम् आसीत् यत् विनोदसदृशः सज्जनः जगति अन्वेषणेनापि न लभ्यते इति । किं तत् भवता विस्मृतम् ?'' इति पृष्टवान् राजगुप्तः ।

''सा तु बाल्यस्य कथा । एषु दिनेषु यदि भवान् तम् अद्रक्ष्यत् तर्हि अज्ञास्यत् यत् सः कीदृशः इति'' इति महानन्देन उक्तम् ।

अनेन आश्चर्यचकितः राजगुप्तः उक्तवान् - ''अद्य एव मया सः राजमार्गे स्थितस्य कस्यचित् वृक्षस्य अधः दृष्टः । स एव माम् अभिज्ञाय महत्या प्रीत्या मया सह सम्भाषणं कृतवान् । आवाभ्यां बाल्ये जाताः घटनाः स्मृत्वा आनन्दः अनुभूतः । राजास्थाने अहम् उन्नते पदे अस्मि इति ज्ञात्वा सः सन्तोषं प्रकटितवान् अपि । मत्तः सः कमपि साहाय्यं न याचितवान् । मम उत्तमां स्थितिं पश्यन् सः ईर्ष्यावान् अपि न जातः । सः निश्चयेन उत्तमः ।



तं दृष्ट्वा मयि भावना उत्पन्ना यत् एतादृशाय राजास्थाने उद्योगदापने यदि अहं सफलः भवेयं तर्हि तत् मम सौभाग्यम् इति । अपि च सः राजास्थाने उद्योगं प्राप्य मम सत्कीर्तिमेव जनयिष्यति इत्यत्र मम नास्ति संशयः'' इति ।

महानन्दः मनसि एव असूयया पीडितः । तथापि बहिः प्रकटयितुं सः न शक्तः । सायं विनोदस्य गृहम् अन्विष्य तत्र गत्वा - ''विनोद ! भवान् महावञ्चकः अस्ति । भवता सोद्देशं मम अपमानः कृतः । मत्तः उन्नतस्थाने स्थितः राजगुप्तः भवता बहुधा प्रशंसितः । एतादृशी बुद्धिरेव भवतः दारिद्र्यस्य कारणं जाता'' इति तीक्ष्णेन वचसा निन्दितवान् ।

विनोदः तस्य वचनानि सर्वाणि श्रुत्वा उक्तवान् - ''मया यथा राजगुप्तः मित्रत्वेन सम्बोधितः तथैव भवान् अपि मित्रत्वेनैव सम्बोधितः । उच्चस्थाने स्थितः यः कोऽपि सुहृत् यदि मिलति तर्हि तेन मम आनन्दः एव । अहं भवन्तमपि मित्रमेव चिन्तितवान् । किन्तु भवता अहं शत्रुः भावितः । अतः शत्रुणा सह यथा, तथा मया व्यवहृतम् । एषः मानवस्य सहजः स्वभावः'' इति ।

''भवान् असत्यकथकः । राजगुप्तः मत्तः उन्नतस्थाने अस्ति । अत एव भवतः व्यवहारः तस्य विषये मृदुः आसीत् । अत एव सोऽपि भवते राजास्थाने उद्योगं दापयितुं प्रयतमानः अस्ति'' इति उक्तवान् महानन्दः ।

राजगुप्ते क्रियमाणम् उद्योगदापनप्रयासं विनोदः न जानाति स्म । अतः सः आश्चर्येण उक्तवान् - ''राजगुप्तः मम दुरवस्थां दृष्टवान् । मयि दयालुः सन् सः मम साहाय्यं कर्तुम् इष्टवान् । सः निश्चयेन अस्ति उत्तमः पुरुषः'' इति ।

एवं विनोदस्य कथनात् पूर्वमेव तत्र आगतः राजगुप्तः महानन्दम् उक्तवान् - ''मया भवतोः सम्भाषणं श्रुतम् । बाल्यमित्रस्य अभिवृद्धिः भविष्यति इत्यतः भवता सन्तोष्टव्यम् आसीत् । किन्तु भवता असूयया निन्दां कर्तुम् आगतम् । एतत् सर्वथा अनुचितं कर्म'' इति ।

तदा महानन्दः स्वस्य अहङ्कारप्रवृत्तिम् अवगतवान् । सः तद्दिने एव सङ्कल्पितवान् यत् मया अहङ्कारः अवश्यं दूरीकरणीयः इति । ततः सः आगामिषु दिनेषु सर्वेषाम् अपि मैत्रीं सम्पादयितुं समर्थः जातः ।





# मायासरोवरः

## २१

*[मायासरोवरस्य दिशि प्रस्थितेन मङ्गलवर्मणा वृक्षशाखानां मध्ये लताजाले निबद्धः रथसारथिः दृष्टः । तस्य आर्तनादं श्रुत्वा सिद्धसाधकः राजा कनकाक्षः च तत्र आगतवन्तौ । तावता जलवृकान् प्रेरयन् घेण्डामृगस्य उपरि उपविष्टः कश्चन तत्र आगतवान् । तं दृष्ट्वा वृक्षस्थः नरवानरः तदुपरि आक्रमणं कृतवान् । तदनन्तरम् ....]*

जलवृकराक्षसाः स्वनायकम् अपायग्रस्तं ज्ञात्वा गणरूपेण आगत्य स्वीयाभिः गदाभिः नरवानरं बहुधा प्रहृतवन्तः । एतत् दृष्टवान् राजा कनकाक्षः स्वसैनिकान् तेषां निवारणाय प्रेषितवान् । सिद्धसाधकः शूलम् उन्नीय – 'जय महाकाल !' इति उद्घोष्य शूलेन जलवृकान् पुनः पुनः प्रहृतवान् ।

द्वित्रान् निमेषान् तत्र घोरं युद्धं प्रवृत्तम् । शिलागदानां प्रहारं प्राप्य नरवानरः भूमौ अपतत् । तावता सैनिकैः परिवृतः जलवृकराक्षसनायकः स्वस्य वाहनम् अग्रे आनीय गदाम् उन्नीय अवदत् – ''अये ! मानवाः ! अहं कः इति किं भवद्भिः ज्ञायते ? अहं मायासरोवरस्य सर्वाधिपतिः जलवृकनाथः अस्मि । मम एतया गदया प्रहृत्य सर्वान् नाशयिष्यामि, ऋते पद्ममुख्याः'' इति ।

नरवानरः मूर्च्छां गतः सन् पतितः आसीत् । सिद्धसाधकः अचिन्तयत् यत्



सेवकः जलवृकः एव तम् उत्थापयितुं समर्थः इति । अतः सः जलवृकम् आहूय अवदत् - ''अये वृकभट ! कुत्रास्ति भवान् ? नरवानरेण ये प्रहाराः प्राप्ताः ते प्राणघातकाः न इति अहं चिन्तयामि । तम् उत्थापयतु तावत्'' इति ।

''आर्य ! प्राणापायभीतिः एव एतादृशेषु जन्तुषु जीवसञ्चारं कारयति'' इति उक्त्वा वृकभटः नरवानरसमीपं गतवान्, वामहस्तेन तस्य कण्ठं गृहीत्वा दक्षिणहस्तेन शिलागदया तं शिरसि प्रहरन् उच्चैः अवदत् - ''अये ! नरवानर ! भवतः शिरः भञ्जयिष्यते इदानीम्'' इति ।

अनन्तरक्षणे एव उत्थितवान् नरवानरः घोरं गर्जनं कुर्वन् जलवृकभटं हस्ताभ्यां गृहीत्वा दूरे क्षिप्तवान् ।

घेण्डामृगस्य उपरि उपविष्टवतः जलवृकराक्षसनायकस्य धावनं दृष्ट्वा सिद्धसाधकः अवदत् - ''एषः दुष्टः कथं ग्रहीतव्यः अस्माभिः ? किम् एषः मायासरोवरं प्राप्नुयात् ? इतः कियद्दूरे अस्ति मायासरोवरः ?'' इति ।

तदा देवशर्मा तत्समीपम् आगत्य अवदत् - ''सिद्धसाधक ! मायासरोवरः इतः अनतिदूरे एव अस्ति । माम् अनुसरतु तावत्'' इति ।

सिद्धसाधकः अङ्गीकारपूर्वकं शिरः चालितवान् । देवशर्मा मार्गं दर्शयन् अग्रे गतवान् । राजा कनकाक्षः तम् अनुसरन् उक्तवान् - ''शर्मवर्य ! जलराक्षसनायकः वदति यत् पद्ममुख्याः प्राणान् न अपहरिष्यामि इति । एतस्य कारणं किम् इति न ज्ञातं मया'' इति ।

''महाराज ! अस्माभिः यत् श्रुतं, यच्च दृष्टं, तस्य आधारेण वक्तुं शक्यते यत् मायासरोवरः पूर्णतः जलराक्षसाधीनः जातः अस्ति इति । पद्ममुखी मायासरोवरेश्वरस्य पुत्री । जलराक्षसनायकः पद्ममुखीं स्नुषात्वेन नेतुम् इच्छति । अतः एव तस्याः सुरक्षितताम् इच्छति सः । एतत् एव अत्रत्यं रहस्यम्'' इति अवदत् देवशर्मा ।

देवशर्मा कनकाक्षः च एवं यदा वार्तालापं कुर्वन्तौ आस्तां तस्मिन् एव समये जयशीलः अन्यैः जनैः सह मायासरोवरं प्राप्तवान् । सः सरोवरः अतिविशालः आसीत् । तं परितः उन्नताः पर्वताः, घोरम् अरण्यं च आसीत् ।

जयशीलः स्वस्य खड्गेन सरोवरजलम्

आलोडयन् - ''भवान् एतस्मिन्नेव सरोवरे खलु निवसति ? आवयोः शत्रुता उत मित्रता ? आदौ तत् वदतु'' इति अवदत् ।

मायासरोवरेश्वरः चिन्तापूर्णया दृष्ट्या काञ्चनमालाम् अपश्यत् । तदा काञ्चनमाला अवदत् - ''जयशील ! अत्र न कोऽपि शत्रुः । मया मकरकेतोः मुखात् श्रुतं यत् भवतः हस्ते स्थितः खड्गः महाकालभक्तेन केनचित् दत्तः इति । तेन खड्गेन भवान् जलवृकराक्षसान् संहृत्य तैः बन्दीकृतौ मम भ्रातरं काञ्चनवर्माणं, मायासरोवरेश्वरस्य पुत्रीं पद्ममुखीं च रक्षतु'' इति ।

''किं मया एकाकिना एव जलवृक-राक्षसाः सम्मुखीकरणीयाः ? भवतु नाम, प्रयत्नं करिष्यामि । भवतः पित्रे मया वचनं दत्तम् अस्ति यत् प्राणानपि पणीकृत्य भवतीं भवदग्रजं च रक्षिष्यामि इति । तस्य पालनं मम कर्तव्यम्'' इति अवदत् जयशलः ।

मायासरोवरेश्वरः किञ्चित् अग्रे आगत्य जयशीलस्य हस्तौ स्वहस्ताभ्यां गृहीत्वा अवदत् - ''जयशील ! हिरण्यपुरस्य राज्ञः पुत्रौ अपहृत्य आनयता मया अपराधः कृतः इति चिन्त्यते खलु भवता ? मकरकेतुं प्रेषियता मया सूचितम् आसीत् यत् राजकुमारः ग्रहीतव्यः इति । किन्तु सः राजकुमारं ग्रहीतुं प्रयत्नं कुर्वन् काञ्चन-मालाम् अपि गृहीत्वा अत्र प्रेषितवान् । एतदवसरे एव व्रणितः सः भवद्भिः दृष्टः । ततः एव बह्व्यः घटनाः प्रवृत्ताः'' इति ।

''युवराजं गृह्णतः भवतः उद्देशः कः आसीत् ?'' इति अपृच्छत् जयशीलः ।



''अत्र महत् रहस्यं किमपि नास्ति । मम एकमात्रपुत्रीम् पद्ममुखीम् अहं काञ्चनवर्मणे दातुम् इच्छामि स्म । तयोः विवाहं निर्वर्त्य एषः मायासरोवरः परित्यक्तव्यः इति मम विचारः आसीत् । किन्तु इदानीं पद्ममुखी काञ्चनवर्माणं परिणेतुं न इच्छति । अतः अहं चिन्ताग्रस्तः अस्मि'' इति अवदत् मायासरोवरेश्वरः ।

तस्य वचनं विश्वासार्हम् इति भासते स्म । सः काञ्चनमालां सकृत् अपश्यत् । सा सरोवरसमीपं गत्वा एकं कमलनालं त्रोटयित्वा आनीतवती । ततः निर्गच्छता रसेन तिलकरूपेण जयशीलस्य ललाटं लिप्तवती । तदनन्तरं सा अवदत् - ''एतेन यत् उच्यते तत् सत्यम् एव । अहम् इदानीं मायासरोवरस्य रहस्यम् उद्घाटयामि । यः एतस्मिन् सरोवरे स्थितस्य कमलस्य नालात्



निर्गतेन रसेन ललाटं लिम्पति सः आजीवनं जले अकुतोभयः स्थातुम् अर्हति'' इति ।

''एवम् ! अहम् इदानीम् एतस्य परीक्षां करिष्यामि'' इति वदन् जयशीलः कूर्दन-पुरस्सरं सरोवरजलं प्रविष्टवान् ।

तटे स्थिताः मायासरोवरेश्वरः, काञ्चन-माला, मकरकेतुः च आशापूर्णया दृष्ट्या निमेषत्रयं यावत् सरोवरम् एव पश्यन्तः स्थितवन्तः जयशीलः कदा जलात् उत्तिष्ठेत् इति प्रतीक्षमाणाः । किन्तु पञ्च निमेषाः अतीताः चेदपि जयशीलः जलात् बहिः न आगतवान् ।

तदा काञ्चनमाला भीतिमिश्रितेन स्वरेण उक्तवती - ''किं जयशीलेन काऽपि विपत्तिः प्राप्ता स्यात् ? जलस्थाः जलवृकराक्षसाः किं तं बन्दीकृतवन्तः स्युः ?'' इति ।

तदनन्तरक्षणे एव जले प्रचलन् कोलाहलः तैः श्रुतः । जयशीलः कञ्चित् युवकं जलवृकं गृहीत्वा जलात् उपरि आनीय तीरे अपातयत् । तं दृष्ट्वा मकरकेतुः अवदत् - ''अहो ! एतस्य ग्रहणाय एव अस्माभिः बहुविधाः प्रयासाः कृताः आसन् । दैवात् अद्य अयं प्राप्तः । एषः जलवृकनायकस्य पुत्रः । अस्माकम् अनुचराः एतस्य पित्रा बन्दीकृताः सन्ति । यदि तेषां कोऽपि अपायः सम्भवेत् तर्हि एतं वयं मारयाम'' इति ।

''अये दुष्ट ! जले निलीय स्थित्वा अस्माकं वार्तालापं शृण्वन्तः आसन् खलु भवन्तः । भवतः पिता सः दुष्टः जलवृक-नाथः क्व ?'' इति खड्गं हस्तेन गृहीत्वा कोपेन अपृच्छत् मायासरोवरेश्वरः ।

''मम पिता अरण्ये स्थितस्य कस्यचित् राज्ञः कापालिकस्य च वधाय इतः निर्गतः अस्ति । ततः प्रत्यागतः सः भवतः सर्वान् संहृत्य काकेभ्यः बलिं दास्यति'' इति गर्वेण अवदत् सः युवकः जलराक्षसः ।

''सः आगत्य किं कुर्यात् इति अनन्तरं पश्याम । काञ्चनवर्मा पद्ममुखी च इदानीं कुत्र स्तः ? तत् वदतु तावत्'' इति अवदत् जयशीलः ।

''तौ रहसि स्थापितौ स्तः । तं च प्रदेशं मम पिता एकः एव जानाति'' इति अवदत् सः युवकः जलराक्षसः ।

एतावता घेण्डामृगम् आरूढः जलवृक-नाथः तत्र उपस्थितः । गदाहस्तानां जलवृक-राक्षसानां गणः तम् अनुसरति स्म । जलवृकनाथः उच्चैः अगर्जत् - ''सर्वे हस्ते स्थितानि आयुधानि भूमौ संस्थाप्य

शरणागतिम् अङ्गीकुर्वन्तु । अन्यथा प्राणवियुक्तिः भवेत् सर्वेषाम्'' इति ।

एतत् श्रुत्वा जयशीलः मकरकेतुम् अवदत् - ''मकरकेतो ! जलराक्षसस्य पुत्रं जलग्रहेण ग्राहयित्वा शुण्डया उन्नाययतु'' इति ।

तदा मकरकेतुः जलग्रहम् आदिशत् - ''अये जलग्रह ! एतं युवकं शुण्डया गृहीत्वा उन्नयतु'' इति ।

तदनन्तरक्षणे एव जलग्रहः शुण्डया तं युवकं जलवृकराक्षसं गृहीत्वा उदनयत् ।

तदा जयशीलः समीपम् आगच्छतः जलवृकान् अवदत् - ''अयि दुष्टाः ! यदि भवन्तः अस्मान् पीडयितुं प्रयासं कुर्युः तर्हि भवतां नायकस्य पुत्रः जलग्रहेण भूमौ पातयित्वा विमर्द्यते । स्मरन्तु एतत्'' इति ।

सिद्धसाधकः तेषां पृष्ठभागतः आगच्छन् - ''महाराज ! भवतः सैनिकाः एतान् दुष्टान् आक्रम्य निगृह्णन्तु । तत्रास्ति जयशीलः'' इति वदन् जयशीलसमीपं गत्वा नरवानरात् अवतीर्णवान् ।

जयशीलः आत्मना सह आगतानां परिचयं सिद्धसाधकं यावत् वदन् आसीत् तावता जलवृकनाथः शिलागदां दूरे क्षिप्त्वा उच्चस्वरेण - ''अहं मम अनुचराः च आयुधं परित्यज्य आत्मसमर्पणं कुर्वन्तः स्मः । मम पुत्रस्य वधं मा कुर्वन्तु कृपया । मया बन्दीकृताः सर्वे अचिरात् एव अत्र आनाय्यन्ते'' इति अवदत् ।

राजा कनकाक्षः जयशीलस्य समीपं गतवान् । काञ्चनमाला धावन्ती अग्रे गत्वा



पितरम् उपसर्प्य तं प्रीत्या आलिङ्ग्य अवदत् - ''तात ! एतस्य मायासरोवरेश्वरस्य पीडनं कथमपि न भवेत् । यत् प्रवृत्तं तद्विषये विषादम् अनुभवति सः'' इति ।

''मायासरोवरेश्वरस्य पुत्री पद्ममुखी प्रायः भवतः स्नुषा भवितुम् इच्छति इति अहं मन्ये'' इति हसन् कनकाक्षराजम् उक्तवान् जयशीलः ।

''पद्ममुख्याः मनसि किम् अस्ति इति अहं जानामि । सा देवशर्मणा परिणीता भवितुम् इच्छति'' इति अवदत् काञ्चनमाला ।

अत्रान्तरे जलवृकनाथं बन्दीकृत्य कैश्चित् सैनिकैः सह जयशीलसमीपम् आगत्य देवशर्मा अवदत् - ''जयशील ! एषः बन्दीकृतौ पद्ममुखी-काञ्चनवर्माणौ आनेतुं काञ्चन अनुचरान् प्रेषितवान् अस्ति । एतस्य

व्यवहारे वञ्चना कापि न स्यात् खलु ?'' इति ।

''यदि वञ्चनापूर्णः व्यवहारः क्रियते तर्हि एषः सपुत्रः जलग्रहेण पादाभ्यां विमर्द्यते'' इति उक्तवान् जयशीलः ।

ततः घण्टाभ्यन्तरे चत्वारः जलवृक-राक्षसाः काञ्चनवर्मणा पद्ममुख्या च सह तत्र आगताः । तौ दृष्टवतोः मायासरोवरेश्वर-कनकाक्षयोः आनन्दः आसीत् सीमातीतः ।

सिद्धसाधकः महाकालस्य जयम् उद्घोष्य उक्तवान् – ''मया यत् श्रुतं तदनुगुणं स्पष्टं यत् पद्ममुखी देवशर्मणः परिणये आसक्ता इति । किन्तु राजकुमार्याः काञ्चनमालायाः मनसि किम् अस्ति इति न ज्ञातम्'' इति ।

तदा राजा कनकाक्षः जयशीलं साभिमानं पश्यन् अवदत् – ''मया उद्घोषितम् आसीत् यत् यः मम पुत्रौ अन्विष्य आनेष्यति तस्मै राज्यस्य अर्धभागः दास्यते इति । जयशीलः स्वस्य पराक्रमेण एतत् कार्यं साधितवान् अस्ति'' इति ।

''काञ्चनमाला एतादृशं पराक्रमिणम् एव परिणेतुम् इच्छति । एवं ननु काञ्चन-माले ? मया युक्तम् उक्तं ननु ?'' इति अवदत् सिद्धसाधकः ।

काञ्चनमाला लज्जया दृष्टिम् अधः कृत्वा पितरं दृष्टवती । तदा सिद्धसाधकः आनन्देन हसन् अवदत् – ''जयशील-काञ्चनमालयोः देवशर्म-पद्ममुख्योः च विवाहः हिरण्यपुरे सवैभवं प्रचलिष्यति । इदानीं सर्वे इतः प्रस्थातुम् अर्हन्ति'' इति ।

''सिद्धसाधक ! भवतः का योजना ?'' इति अपृच्छत् जयशीलः ।

''अहं किञ्चित्कालम् एतस्य सरोवरस्य तीरे वसन् महाकालस्य उपासनं करिष्यामि । अत्र ये जलवृकाः नरभक्षिणः च सन्ति ते सर्वे मम सेवकाः सन्ति'' इति वदन् सिद्धसाधकः स्वस्य शूलम् उन्नीतवान् ।

एतदनन्तरं जयशीलः, कनकाक्षः, मायासरोवरेश्वरः, काञ्चनवर्मा, काञ्चन-माला, पद्ममुखी इत्यादयः मकरकेतुप्रभृतयः च ततः प्रस्थितवन्तः । जलवृकराक्षसाः नरभक्षिणः च सिद्धसाधकं परितः तिष्ठन्तः जयघोषं कुर्वन्तः नृत्यम् आरब्धवन्तः ।

– *(समाप्तम्)*



वेताल-कथा

# शन्तनोः निर्णयः

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान् । वृक्षम् आरुह्य शवम् अवतार्य स्कन्धे आरोप्य अधः आगतवान् । ततः यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये, राजन् ! मध्यरात्रसमयः एषः । घोराः जन्तवः बहवः सञ्चरन्ति अत्र । यदा-कदाचिदपि प्रेतपिशाचादयः भवन्तं पीडयितुम् अर्हन्ति । तथापि भवान् स्वप्रयत्नं न परित्यजति एव । अहं चिन्तयामि यत् भवान् कस्याश्चित् क्षुद्रदेवतायाः उपासनां कुर्वन् अस्ति इति । 'अहं राजा अस्मि' इत्येव विस्मृतम् अस्ति भवता । प्रजापालनं भवतः कर्तव्यं खलु ? तत् विस्मृत्य



व्यर्थे कार्ये आत्मानं प्रवर्तयन् अपायान् सम्मुखीकुर्वन् अस्ति भवान् । भवान् प्रायः चिन्तयति यत् धर्मः न्यायः च मम पक्षे रतः, अतः अन्तिमः जयः मम एव इति । वस्तुतः एषः भ्रमः एव । कदाचित् केचन शासकाः तथा चिन्तयन्ति अज्ञानवशात् । एतस्य उदाहरणरूपेण शन्तनुनामकस्य राज्ञः कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा –

शन्तनुराजस्य उभौ पुत्रौ । ज्येष्ठः कुन्तलः इति । सः शान्तस्वभावः । द्वितीयः चित्राङ्गः । सः त्वराशीलः ।

तौ उभौ अपि अस्त्रशस्त्रादिषु विद्यासु यदा निपुणाः जाताः, विविधेषु शास्त्रेषु यदा पारङ्गताः जाताः, तदा राज्ञः पुरतः समस्या उपस्थिता यत् अनयोः कतरः सिंहासने प्रतिष्ठापनीयः इति ।

ज्येष्ठः कुन्तलः वस्तुतः सिंहासनस्य उत्तराधिकारी भवेत् । तस्मै राजत्वदानं परम्परासम्मतम् । किन्तु द्वितीयः पुत्रः चित्राङ्गः वदति स्म यत् अहम् एव राज्यस्य उत्तराधिकारी भविष्यामि इति ।

राजा तं बहुधा बोधितवान् । तथापि सः स्वनिर्णयं न परिवर्तितवान् । अनुजस्य निर्णयं ज्ञातवान् कुन्तलः अवदत् – ''भ्राता चित्राङ्गः सिंहासनम् आरोढुम् इच्छति । अतः तस्मै एव राज्याधिकारः दीयताम् । तस्य पट्टाभिषेकः भवतु । अहं तस्य सहायकरूपेण स्थास्यामि'' इति ।

''मम सिंहासनारोहणे अग्रजस्यैव कापि आपत्तिः नास्ति । एवं स्थिते किमर्थं निराक्रियते भवता ?'' इति पितरम् असन्तोषेण पृष्टवान् चित्राङ्गः ।

''ज्येष्ठः पुत्रः सिंहासने प्रतिष्ठापनीयः इति तु परम्परागतः सम्प्रदायः । तस्य सम्प्रदायस्य रक्षणं मम धर्मः । तस्य भङ्गं किमर्थं कर्तुम् इच्छति भवान् ?'' इति प्रतिप्रश्नं कृतवान् शन्तनुः ।

''अहं राजा भवितुम् इच्छामि । अग्रजश्च राजा भवितुं न इच्छति । यस्य इच्छा तं राजानम् अकृत्वा, यस्य अनिच्छा तस्य सिंहासने प्रतिष्ठापनं किं श्रेष्ठः सम्प्रदायः ?'' इति पितरं पुनः पृष्टवान् चित्राङ्गः ।

''यदि भवतः अग्रजः सिंहासनारोहणं न इच्छति तर्हि समर्थं योग्यं च कञ्चित् राजानं करवाम । राजपरिवारे जातः एव राजा भवेत् इति चिन्तनं किमर्थम् ? यस्य योग्यता सः

राजा भवतु । राजकुलस्य परम्परायाः पालने आदरः तु नास्ति खलु भवतः ? एवं सति समर्थाय राजत्वदानम् एव अधिकम् औचित्यम् आवहति'' इति उक्तवान् शन्तनुः ।

तदा चित्राङ्गः भीत्या अवदत् - ''राजपरिवारे प्रजानां श्रद्धा अस्ति । राजपरिवारीयः एव कश्चित् राजा भवेत् इति तासाम् इच्छा । अतः यत्किञ्चित् राजानं कर्तुं न इच्छन्ति प्रजाः'' इति ।

''प्रजानाम् इच्छा एव यदि प्रमुखा तर्हि कुन्तलस्य एव सिंहासने प्रतिष्ठापनं युक्तम् । यतः प्रजानाम् अधिकः आदरः अस्ति कुन्तले एव'' इति उक्तवान् राजा ।

तदा उक्तवान् चित्राङ्गः - ''एतत् अहं न अङ्गीकरोमि'' इति ।



शन्तनुः सम्यक् विचिन्त्य उभौ अपि राजकुमारौ देशपर्यटनाय प्रेषितवान् । प्रजानाम् आदरः कस्मिन् अधिकः इति ज्ञानम् एव एतस्य उद्देशः आसीत् ।

देशे सर्वे जनाः उभयोः अपि राजकुमारयोः स्वभावं सम्यक् जानन्ति स्म । अतः ते चित्राङ्गे एव अधिकम् आदरं प्रदर्शितवन्तः । कुन्तले तेषां विशेषादरः आसीत् एव, किन्तु तं गुप्ततया स्थापितवन्तः ते ।

देशसञ्चारं कृत्वा प्रत्यागतः चित्राङ्गः पितरम् उद्दिश्य - ''आत्मना नियुक्तानां गुप्तचराणां द्वारा भवान् ज्ञातवान् एव स्यात् यत् मयि एव जनाः अधिकम् आदरं प्रकटितवन्तः इति'' इति गर्वेण अवदत् ।

''कुन्तलं जनाः स्वकीयं भावयन्ति । तस्मिन् महत् प्रेम तेषाम् । भवत्तः भीताः भवन्ति ते । अतः शब्दैः आदरं प्रकटयन्ति ते भवद्विषये । हृदये तु आदरः अधिकः तेषां कुन्तलविषये एव । एषा वस्तुस्थितिः'' इति अवदत् राजा ।

एतत् श्रुत्वा क्रुद्धः चित्राङ्गः अवदत् - ''कुन्तले प्रजानां प्रीतिः अधिका इत्येव चिन्तयाम । प्रजानां प्रीतिः इत्येषः राज्ञि अपेक्षितः एकः गुणः । एतदतिरिच्य राजतो भीतिः, राज्ञि आदरः भक्तिः चापि प्रजासु भवेत् । ते सर्वे गुणाः मयि सन्ति । अतः सिंहासने मम प्रतिष्ठापनम् एव न्यायसम्मतं स्यात्'' इति ।

एतत् श्रुत्वा शन्तनुः हसन् अवदत् - ''राजत्वप्राप्तेः अनन्तरं यदि भवतः शासनं सुचारु न स्यात् तर्हि जनाः भवति आदरवन्तः न स्युः । एतत् न विस्मर्तव्यं भवता'' इति ।



''अस्तु नाम । अग्रजतः अपि राज्यशासने अहमेव श्रेष्ठः इति खलु मया निरूपणीयम् ? अस्तु, तदपि निरूपयिष्यामि । तदर्थं कञ्चित् अवसरं कल्पयतु मह्यम्'' इति पितरम् अवदत् चित्राङ्गः ।

''राजधानीतः अनतिदूरे त्रयः ताडवृक्षाः सन्ति । तेषु दुष्टशक्तयः निवसन्ति इति जनाः वदन्ति । विंशतेः वर्षेभ्यः पूर्वम् अहम् एकेनैव प्रहारेण तान् त्रीन् अपि वृक्षान् छिन्नवान् आसम् । ताडवृक्षाणां स्वभावः यत् सकृत् कर्तिताः ते पुनः न वर्धन्ते । किन्तु एते वृक्षाः मम छेदनानन्तरं पुनरपि प्रवृद्धाः सन्ति । अतः, दुष्टशक्तयः तेषु पुनरपि वसन्ति इति मम विश्वासः । तत्कारणतः एव राजत्वप्राप्तौ भवति इच्छा उत्पन्ना दृश्यते । किं भवान् एकेनैव प्रहारेण तान् त्रीन् अपि छेत्तुं शक्नुकात् ?'' इति अपृच्छत् शन्तनुः ।

''निश्चयेन छेत्स्यामि तान्'' इति अवदत् चित्राङ्गः । तस्य मनसि विश्वासः आसीत् यत् मम अग्रजः एतत् कार्यं कर्तुं न शक्नुयात् इति । अतः सः अवदत् – ''आदौ अग्रजः एतत् कार्यं करोतु'' इति ।

शन्तनुः यदा ज्येष्ठपुत्रम् उक्तवान् तदा सः अवदत् – ''एतान् त्रीन् अपि वृक्षान् एकप्रहार-मात्रेण छेत्तुम् अर्हामि इति मम विश्वासः अस्ति । किन्तु यदि अहम् एतान् छिनद्मि तर्हि चित्राङ्गः एतदर्थम् अवसरं न प्राप्स्यति । अतः आदौ चित्राङ्गः एव एतान् छेत्तुं प्रयासं करोतु'' इति ।

ततः चित्राङ्गः एकेन एव प्रहारेण त्रीन् अपि वृक्षान् छिन्नवान् । एतत् दृष्ट्वा सर्वे आश्चर्यचकिताः ।

तदा राजा शन्तनुः अवदत् – ''पूर्वम् अहं देशहितेच्छया एतान् वृक्षान् छिन्नवान् आसम् । इदानीं तु भवान् राजत्वप्राप्त्याशया एतान् छिन्नवान् । निःस्वार्थी अहं छिन्नवान् चेदपि एते प्रवृद्धाः । स्वार्थी भवान् राजा यदि भविष्यति तर्हि एताः दुष्टाः शक्तयः निश्चयेन देशं पीडयिष्यन्ति'' इति ।

''दुष्टशक्तिभ्यः देशस्य रक्षणाय एव मया एते वृक्षाः कर्तिताः । तथापि मयि स्वार्थः अस्ति इति भवता आरोप्यते । अस्तु, स्वसामर्थ्यनिरूपणाय अन्यः अवसरः मह्यं दीयताम् । मह्यं भ्रात्रे च एकैकस्य नगरस्य शासनकार्यं दीयताम् । वर्षं यावत् तत् नगरं पालयिष्यावः आवाम् । तदा आवयोः शासन-विषये प्रजानां निर्णयः कः इति भवता ज्ञायते । तत् आधारीकृत्य भवता यत् निर्णीयते तत्

शिरसा धरिष्यामि अहम्'' इति अवदत् चित्राङ्गः ।

शन्तनुः चित्राङ्गस्य प्रस्तावम् अङ्गीकृतवान् । सः कुन्तलाय धर्मपुर्याः, चित्राङ्गाय सत्यपुर्याः च शासनं समर्पितवान् । उभौ अपि वर्ष यावत् तयोः नगरयोः पालनं कृतवन्तौ ।

धर्मपुरीं गतवान् कुन्तलः जनान् मेलयित्वा 'भवतां समस्याः काः?' इति अपृच्छत् । ततः योग्यानां जनानां साहाय्येन समर्थाः केचन जनाः तेन चिताः । तेभ्यः कार्याणि दत्तानि, निर्णयाधिकारश्च प्रदत्तः । यः कोऽपि कुन्तलं दृष्ट्वा स्वसमस्यां निवेदयितुम् अर्हति स्म । उच्चनीचभेदं विना सर्वेषां हिताय समानतया कार्यं कृतं तेन । सः आधिक्येन निर्धनानां गृहेषु भोजनं करोति स्म, तेषां कष्टसुखादिकं शृणोति स्म च ।

सत्यपुरीं गतः चित्राङ्गः आदौ एव अधिकारदर्पं प्रदर्शितवान् । स्वस्य मित्राणि, प्रशंसकान् च उन्नते स्थाने नियोजितवान् । विरोधिनः निर्दयं दण्डिताः तेन । विविधानां मनोरञ्जनानां प्रोत्साहनं कृतम् । शासकस्य अप्रीतिः न स्यात् इति सदा जागरूकाः भवन्ति स्म जनाः ।

वर्षाभ्यन्तरे नगरद्वये अपि अभिवृद्धिः जाता । शन्तनुः गुप्तचराणां द्वारा उभयनगरयोः अपि वार्तां सङ्गृह्णन् आसीत् । धर्मपुर्याः जनाः उक्तवन्तः यत् कुन्तलः अत्रैव नगरपालकरूपेण अनुवर्तताम् इति । सत्यपुर्याः जनाः उक्तवन्तः यत् चित्राङ्गः राजा भवतु इति ।

वर्षम् अतीतम् । राजा शन्तनुः उभौ अपि



पुत्रौ आहूय अवदत् - ''प्रजानां मतं किम् इति मया पूर्णतया अवगतम् अस्ति । अतः मम निर्णयः अस्ति यत् कुन्तलः एव एतद्देशस्य सिंहासनस्य योग्यः उत्तराधिकारी भविष्यति इति । सः एव एतस्य देशस्य भावी राजा'' इति ।

''भवतः आज्ञा शिरोधार्या मम'' इति मन्दहासपूर्वकम् अवदत् कुन्तलः ।

किन्तु चित्राङ्गः क्रोधमिश्रितेन स्वरेण अवदत् - ''जनानां मतस्य ज्ञानमात्रं किं पर्याप्तम् ? तस्य क्रियान्वयनं किं न चिन्त्यते ?'' इति ।

तदा शन्तनुः गम्भीरस्वरेण उक्तवान् - ''अस्माकं देशे बहूनि नगराणि सन्ति । तेषां शासनं राजा स्वयं न करोति । नगरपालः यदि समर्थः भवति तर्हि तत्रत्यं शासनं सुचारु

भविष्यति । किन्तु यदि सः एव असमर्थः भविष्यति तर्हि राजा समर्थः भवति चेदपि न किमपि प्रयोजनम् । तत्रत्यैः अनेकानि कष्टानि सोढव्यानि भवन्ति एव । एतत् सत्यं सत्यपुर्याः धर्मपुर्याः च जनाः सम्यक् जानन्ति । मम यः निर्णयः अस्ति सः प्रजानां मतम् अवलम्ब्य एव अस्ति । अतः कुन्तलस्य एव पट्टाभिषेकः भविष्यति'' इति ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! शन्तनोः निर्णयः धर्मविरुद्धः न्यायविरुद्धः च किं न ? सः सर्वदा कुन्तलस्य एव पक्षस्य समर्थकः आसीत् । नगरपालनपरीक्षायां वस्तुतः चित्राङ्गस्यैव जयः आसीत् । तथापि कुन्तलम् एव राजानं कृतवान् शन्तनुः । किम् एतत् उचितम् ? किम् एतत् न्यायविरुद्धं धर्मविरुद्धं च न ? किं राजा अविवेकी स्वजनपक्षपाती च न ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि क्षणाभ्यन्तरे भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''न्यायः धर्मः च सर्वदा सर्वैः अनुसरणीयौ एव । राज्ञा तु ताभ्यां सह राजनीतिः अपि अनुसरणीया । धर्मपुरीयाः उक्तवन्तः यत् कुन्तलः एव नगरपालः भवतु इति । 'यदि कुन्तलः राजा भवेत् तर्हि अन्यः कोऽपि नगरपालः भवेत्, तदा तस्य पालनं कीदृशं भवेत् इति न ज्ञायते' इति विचिन्त्य ते तथा उक्तवन्तः । सत्यपुरीयाणां चिन्तनम् आसीत् यत् चित्राङ्गः यावच्छीघ्रम् इतः निर्गच्छेत् इति । 'यदि चित्राङ्गः राजा भवेत् तर्हि तस्य पीडा न भवेत्' इति विचिन्त्य तैः तथा उक्तम् आसीत् । चित्राङ्गः मित्राणां प्रशंसकानां च आनुकूल्यं कल्पितवान् आसीत् । किन्तु प्रजानां हितं विशेषतः न चिन्तितवान् आसीत् । यस्य वियोगं जनाः न इच्छन्ति सः एव राजा भवितुं योग्यः । एतत् शन्तनुः सम्यक् जानाति स्म । तस्मात् सः कुन्तलं राजानं कृतवान् । तस्य व्यवहारः न्यायविरुद्धः धर्मविरुद्धः वा न आसीत् सर्वथा'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।






## कर्णाटके तीरविहारस्थानानि



कर्णाटकराज्यस्य दक्षिणभागः २०० मैलीदीर्घसमुद्रतीरात्मकः अस्ति । एतस्य तीरप्रदेशस्य अर्धभागः उत्तरकन्नडजनपदे अन्तर्भवति । एतस्मिन् प्रदेशे २४ तीरविहारस्थानानि (बीच्) सन्ति । तानि सर्वाणि प्रायः सुव्यवस्थिततया रक्षितानि, स्वच्छानि च । तत्रत्याः निर्मलाः सिकताः स्थानीयन् अन्यप्रदेशीयान् यात्रिणः च आकर्षन्ति । तादृशेषु तीरविहारस्थानेषु एकम् ओङ्काराकारेण अस्ति । एतत् असङ्ख्यान् यात्रिणः आकर्षति । एतादृशम् एव अपरं तीरविहारस्थानम् अस्ति 'रवीन्द्रनाथटागोर्बीच्'नामकम् ।

## सरस्वती आसीत् इत्यत्र प्रमाणम्

भारते स्थितासु महाकारिकासु नदीषु सरस्वती अपि अन्यतमा । किन्तु तस्याः सद्भावः न दृश्यते कुत्रापि । सा गुप्तगामिनीत्वेन निर्दिश्यते । प्रयागे त्रिवेणीसङ्गमनामके स्थले एषा गङ्गयमुनयोः मिलति इति विश्वासः अस्ति आ सहस्राधिकवर्षेभ्यः । हरियाणाराज्ये एषा पूर्वं यत्र प्रवहति स्म तत्र उत्खननकार्यम् इदानीं कुर्वती अस्ति 'आर्कियालजिकल् सर्वे आफ् इण्डिया' इत्येषा संस्था । आदिबद्रीनामके स्थले भवनानि, सभामण्डपाः, कलाकृतयः, घटादीनि वस्तूनि च प्राप्तानि सन्ति । एतस्मात् स्पष्टं यत् अत्र काचित् नदी प्रवहति स्म, तस्याः तीरे जनाः वसन्ति स्म इति । सा नदी सरस्वती एव इति भूगर्भविज्ञानिनां मतम् अस्ति । ते अभिप्रयन्ति यत् सरस्वतीतीरे स्थितेषु केषुचित् तीर्थस्थलेषु आदिबद्री अपि अन्यतमम् आसीत् इति ।



## पुराणकथावली - २०

# मध्यरात्रे युद्धम्



पर्वतप्रदेशे दीर्घप्रयाणं कृत्वा विजयः विपुलः च किञ्चन विश्रान्तिगृहं प्राप्तवन्तौ । तौ पूर्वपरिचितौ तु न । प्रयाणसमये अकस्मात् मिलितौ तौ । उभयोः अपि गन्तव्यं स्थानं समानम् आसीत् ।

उभौ अपि भोजनालये आकण्ठं भोजनं कृतवन्तौ । विपुलः सम्यक् मद्यम् अपि पीतवान् । तावता मध्यरात्रः आसन्नः इव ।

यदा विचारितं तदा विश्रान्तिगृहस्वामी अवदत् - ''भवतोः सौभाग्येन इव उभौ प्रकोष्ठौ रिक्तौ स्तः । तौ अपि इदमिदानीं रिक्तौ जातौ । एकः प्रथमे अट्टे अस्ति, अपरः द्वितीये अट्टे । उभयोः अपि स्वच्छतां कृत्वा दीपः ज्वालितः अस्ति । भवन्तौ गत्वा परीक्षताम् । उभयोः अपि एकत्र एव वासः उत पृथक्प्रकोष्ठे इति निर्णयताम्'' इति ।

विजयः विपुलः च प्रथमे अट्टे स्थितं प्रकोष्ठं गतवन्तौ । तदा विपुलः विजयम् अवदत् - ''अत्र वायुसञ्चारः न्यूनः । भवान् उपरि गत्वा अपरं प्रकोष्ठं दृष्ट्वा आगच्छतु । तत्र वायुसञ्चारः अधिकः अस्ति चेत् अहं तत्रैव शयनं करिष्यामि'' इति ।

विजयः उपरि गत्वा प्रकोष्ठं दृष्ट्वा प्रत्यागत्य अवदत् - ''उपरितनः प्रकोष्ठः वायुसञ्चारयुक्तः अस्ति । आवाम् उभौ अपि तत्र शयनं करवाव'' इति ।

''नैव मित्र ! अहं मम प्रकोष्ठे अन्यस्य वासं न इच्छामि'' इति उक्त्वा उत्थितवान्

विपुलः उपरितनं प्रकोष्ठं गन्तुम् । मद्यपानम् आधिक्येन कृतम् इत्यतः तस्य गतिः स्खलति स्म । तस्य ध्वनिः अपि अस्पष्टः आसीत् । सः अवदत् - ''अहम् एकाकी तत्र वासं कर्तुम् इच्छामि । भवान् अत्रैव वसतु'' इति ।

विजयः अपि पानमत्तेन सह वासं कर्तुं न इच्छति स्म । मद्यगन्धः तस्य प्रियः न आसीत् । मत्तानाम् अशिष्टः व्यवहारः अपि तस्मै न रोचते स्म ।

अतः सः अवदत् - ''अस्तु मित्र ! अहं भवन्तं प्रकोष्ठं प्रापयिष्यामि'' इति । ततः सः विपुलस्य स्यूतम् उन्नीय उपरि गमनाय हस्तसाहाय्यं दातुम् उद्युक्तः ।

किन्तु विपुलः एतत् साहाय्यं निराकुर्वन् - ''मां किं शिशुं भावयति भवान् ? अहं मद्यं पीतवान् स्यां, तथापि मम शक्तिः तु न क्षीणा । अन्यस्य साहाय्यं विना विन्ध्यपर्वतम् अपि अहं विना क्लेशम् आरोढुं शक्नोमि । भवतः साहाय्यं न आवश्यकं मम । अहं स्वयम् उपरि गच्छामि'' इति उक्त्वा विजयस्य हस्ते स्थितं स्यूतं बलात् आकृष्य ततः प्रस्थितवान् ।

''अस्तु नाम । एकाकी एव गच्छतु नाम भवान् । शुभरात्रिः'' इति उक्त्वा विजयः प्रकोष्ठस्य द्वारं पिहितवान् ।

सः सुखेन शयनं कृतवान् । समीचीना निद्रा प्राप्ता तेन । सूर्योदयसमये तेन जागरणं प्राप्तम् । प्रातर्विधिं समाप्य अग्रे गमनाय सिद्धः अभवत् सः । तावता तेन विपुलः स्मृतः । 'सः मया सह आगच्छेत् उत न इति निश्चित्य एव अग्रे गमनं वरम्' इति विचिन्त्य विजयः उपरितनं प्रकोष्ठं प्रति प्रस्थितवान् ।

तत्र तेन दृष्टं यत् विपुलः प्रकोष्ठात् बहिः सञ्चारपथे सुप्तः अस्ति, तस्य स्यूतश्च प्रकोष्ठस्य अन्तः अस्ति इति । विजयः कष्ठेन विपुलम् उत्थापितवान् । मन्दम् उत्थाय उपविश्य विपुलः हस्ताभ्यां नेत्रे मार्जयित्वा



**गिरयो गुरवस्तेभ्योऽप्युर्वी गुर्वी ततोऽपि जगदण्डम् ।**
**तस्मादप्यतिगुरवः प्रलयेऽप्यचला महात्मानः ।।**

लोके गिरयः महाकारकाः । ततोऽपि महाकारिका भवति पृथिवी । ततोऽपि विपुलं भवति एतत् ब्रह्माण्डम् । किन्तु तस्मादपि श्रेष्ठाः भवन्ति महात्मानः । ते तु प्रलयकालेऽपि अचलाः भवन्ति ।

– भामिनीविलासः



परितः दृष्टिं प्रसारितवान् । पार्श्वे स्थितः मम सहयात्री विजयः एव इति सः अवगतवान् । तस्य मुखे महत् आश्चर्यं दृश्यते स्म । सः विजयम् अवदत् – ''ते दुष्टाः कुत्र गताः ? ते मम स्यूतं स्वीकृत्य पलायितवन्तः स्युः'' इति ।

''दुष्टाः कुत्र ? अत्र अन्यः कोऽपि न दृश्यते ! भवतः स्यूतः प्रकोष्ठे एव अस्ति'' इति अवदत् विजयः ।

विपुलः क्षणकालं यावत् गतरात्रौ प्रवृत्तं सर्वं स्मृत्वा अवदत् – ''यदा अहं प्रकोष्ठं प्रविष्टवान् तदा चत्वारः दुष्टाः सम्भूय मम उपरि आक्रमणं कृतवन्तः । ते पूर्वम् एव प्रकोष्ठे निलीय स्थितवन्तः आसन् इति मन्ये । मया ते प्रहृताः । किन्तु ते मां कदा प्रकोष्ठात् बहिः क्षिप्तवन्तः इति तु न ज्ञायते । प्रायः अत्र पतितः अहं मूर्च्छां गतः स्याम्'' इति ।

तदा किं प्रवृत्तं स्यादिति ऊहितवान् विजयः अवदत् – ''मित्र ! अहं भवन्तं प्रकोष्ठं प्रापय्य अत्र चत्वारः विशालाः दर्पणाः सन्ति इति ज्ञापयितुम् इच्छामि स्म ह्यः । भवता तत् निराकृतम् । दीपस्य मन्दप्रकाशे भवता यदा प्रकोष्ठः प्रविष्टः तदा चतसृषु दिक्षु भवतः एव प्रतिबिम्बाः दृष्टाः । तान् दुष्टान् मन्यमानः भवान् दर्पणान् एव प्रहृतवान् । प्रहरणचिह्नानि तत्र दृश्यन्ते, पश्यतु । सौभाग्यवशात् न कोऽपि दर्पणः भग्नः । यदि कोऽपि दर्पणः भग्नः स्यात् तर्हि भवान् व्रणितः अभविष्यत्, दण्डः च भवता दातव्यः अभविष्यत्'' इति ।

क्षणकालस्य मौनस्य अनन्तरं विपुलः स्वगतम् इव अवदत् – ''एवं तर्हि मया आत्मना सहैव युद्धं कृतम् ?'' इति ।

''आं, मित्र ! अज्ञानकारणतः जीवने अस्माभिः बहुधा एवं क्रियते'' इति अवदत् विजयः ।





# अपूर्वः प्रश्नः

वृद्धा पूर्णिमा पुत्रेण स्नुषया च सह सुखेन जीवति स्म । स्नुषापुत्रौ महत्या प्रीत्या तां पोषयतः स्म । कदाचित् ते क्षेत्रे कार्यं समाप्य यदा गृहं प्रत्यागच्छन्तौ आस्तां तदा महती वृष्टिः आरब्धा । तयोः उपरि तडित् पतिता । तस्मात् कारणात् तौ उभौ अपि मृतौ ।

एतस्मात् द्वादशवर्षीयायाः तयोः प्रीतिपात्रपुत्र्याः लतायाः पोषणदायित्वं निर्वोढव्यम् आपतितम् वृद्धया पूर्णिमया ।

परम्परातः आगता एकरद्वयपरिमिता या भूमिः आसीत् तस्यां स्वयं कृषिं कर्तुम् अशक्नुवती पूर्णिमा तां भूमिम् अन्यस्मै कृष्यर्थं दत्तवती । पौत्र्याः साहाय्येन विविधप्रकारकान् अवलेहान् निर्माय तेन धनेन जीवननिर्वहणम् आरब्धवती च ।

एवमेव अष्टौ वर्षाणि अतीतानि । इदानीं वृद्धायाः पूर्णिमायाः कटिवेदना आरब्धा । कार्यकरणसमये पीडाकारणतः महत् कष्टम् अनुभवति स्म सा । अपि च कृष्यर्थं भूमिं स्वीकृतवान् सः जनः समये समये देयं धनम् अयच्छन् तां पीडयति स्म । पूर्णिमायाः एका एव इच्छा आसीत् यत् मरणात् पूर्वं सत्कुलप्रसूताय पौत्रीं दत्त्वा विवाहः निर्वर्तनीयः इति ।

समीपस्थे नगरे नागराजः नाम कश्चन वणिक् आसीत् । सः पूर्णिमायाः पुत्रस्य परममित्रम् आसीत् । पूर्णिमया श्रुतम् आसीत् यत् नागराजः सुगन्धवस्तूनां वाणिज्यं कुर्वन् अस्ति, तदीयं वाणिज्यं सम्यक् प्रचलति इति । इदानीं नागराजः लक्षाधिपतिः अस्ति । तस्य उभौ पुत्रौ अपि स्तः ।

कदाचित् पूर्णिमा स्वग्रामवासिनः रमेशश्रेष्ठिवर्यस्य गृहं गतवती । कुशलप्रश्नानन्तरं पूर्णिमया कथितम्– ''श्रेष्ठिमहोदय ! अहं तु वृद्धा जाता । मम एका एव इच्छा अस्ति यत् मम पौत्र्याः लतायाः विवाहः धनिककुलोत्पन्नेन वरेण सह स्यात् इति । यदि निर्धनपरिवारस्य सम्बन्धः क्रियेत तर्हि मम पौत्र्या आदिनं कार्यं कुर्वत्या परिग्लानता प्राप्तव्या



भवेत् । बहुधा पीडा प्राप्तव्या भवेत् अपि । अतः मम इच्छा अस्ति यत् मम पुत्रस्य मित्रेण नागराजेन मेलितुं नगरं गन्तव्यं, तदीयाय ज्येष्ठपुत्राय मम पौत्र्याः दानविषये वार्तालापः करणीयः इति । एतदर्थं धनस्य आवश्यकता अस्ति । अतः भवान् द्विशतं रूप्यकाणि ऋणरूपेण ददातु कृपया'' इति ।

रमेशश्रेष्ठी जानाति स्म यत् एषः विवाहः न सम्भविष्यति, अपि च वृद्धायै पूर्णिमायै दत्तम् ऋणं न प्रत्यागमिष्यति इति । अतः ऋणदानं स्पष्टशब्दैः निराकर्तुम् अशक्नुवन् सः विनम्रस्वरेण उक्तवान् - ''किं वदन्ती अस्ति भवती ? नागराजस्य पुत्रेण सह भवत्याः पौत्र्याः विवाहः ! नागराजः इदानीं लक्षाधिपतिः अस्ति इति किं न जानाति भवती ? सः निर्धनमहिलायाः भवत्याः पौत्र्याः विवाहसम्बन्धं कुतो वा अङ्गीकुर्यात् ? मम कुसीदवाणिज्यम् अपि उत्तमरूपेण न प्रचलति इदानीम् । जनाः ऋणरूपेण धनं तु नयन्ति । किन्तु तस्य प्रत्यर्पणम् एव विस्मरन्ति । समये वृद्धिः अपि न प्राप्यते । भवती अन्यथा न भावयतु । अहं द्विशतं रूप्यकाणि ऋणरूपेण दातुं न शक्नोमि'' इति ।

तस्मिन् समये तदीयः कर्मचारी लड्डुकानि आनीतवान्, पूर्णिमायाः पुरतः स्थापितवान् च । परन्तु तस्य स्वीकारं निराकुर्वती पूर्णिमा - ''एतानि लड्डुकानि अपथ्यानि मम । अतः एतानि न आवश्यकानि मह्यम्'' इति वदन्ती ततः निर्गतवती ।

मध्येमार्गं परोपकारशीलः भुजङ्गशास्त्री तया मिलितवान् । सः पूर्णिमां पृष्टवान् - ''महति आतपे कुत्र प्रस्थिता भवती ?'' इति ।

पूर्णिमा प्रवृत्तं विवृतवती । तदा भुजङ्गशास्त्री महत्या प्रीत्या कथितवान् - ''पौत्र्याः विवाहविषये चिन्तां न करोतु । सर्वे जानन्ति यत् भवत्याः परिवारः उत्तमः इति । भवती अपि जानाति एव यत् मम भवत्याः पुत्रस्य च महती मैत्री आसीत् इति । भवत्याः पुत्रेण मम महत् साहाय्यं कृतम् । मित्रस्य पुत्र्याः विवाहनिर्वर्तनं मम अपि दायित्वम् अस्ति । नगरे वसन्तं नागराजम् अहम् अपि सम्यक् जानामि । धनं प्राप्तं चेदपि भवती अस्मिन् वयसि तावद्दूरं गन्तुं न शक्नोति । अद्य एव अहं नगरं गमिष्यामि । नागराजं च द्रक्ष्यामि । तेन सह भवत्याः पौत्र्याः विवाहविषये वार्तालापं कृत्वा प्रत्यागमिष्यामि'' इति ।

''तथैव करोतु वत्स ! भवतः साहाय्यं

आजीवनं न विस्मरिष्यामि'' इति उक्त्वा सा गृहं गतवती ।

भुजङ्गशास्त्री तस्मिन्नेव दिने नगरं गतवान् । नागराजेन सह विस्तरेण विवाहविषये वार्तालापं कृत्वा ग्रामं प्रत्यागतवान् । प्रत्यागमनसमये सः पूर्णिमायाः गृहं गतवान्, प्रवृत्तं सर्वं तां निवेद्य – ''आर्ये ! नागराजः आढ्यः अस्ति । तथापि भवत्याः परिवारविषये तस्य महान् आदरः अस्ति । भवत्याः पुत्रस्य मित्रत्वं सः स्मरति । भवत्याः पौत्र्या लतया सह स्वस्य ज्येष्ठपुत्रस्य विवाहं निर्वर्तयितुं सः सिद्धः अस्ति अपि । परन्तु सः इच्छति यत् तस्य भाविनी स्नुषा बुद्धिमती, विवेकिनी, गुणवती च स्यात् इति'' इति उक्त्वा स्यूततः एकं रजतचषकं निष्कास्य पुनरपि अवदत् – ''एतस्य चषकस्य विषये अनन्तरं वदिष्यामि । भवत्याः पौत्रीं प्रति नागराजेन प्रश्नद्वयं पृष्टम् अस्ति । प्रथमः प्रश्नः अस्ति – 'भोजनं करणीयं चेत् भूरिभोजनम् एव करणीयं, श्रोतव्यम् एव चेत् महाभारतम् एव श्रोतव्यम् इत्येतत् वचनं तु सामान्याः अपि वदन्तः भवन्ति । तादृशस्य महाभारतस्य अपरं नाम अपि अस्ति । भवत्याः पौत्रीं पृच्छतु – तत् अपरं नाम किम् इति । अपरः प्रश्नः – भगवतः अनुग्रहेण इच्छामरणं प्राप्तवान् अपि कोऽपि जनः किं जीवने मृत्युं प्रार्थयेत् इति । किम् एतयोः उत्तरं भवत्याः पुत्री जानीयात् ?'' इति ।

एतत् श्रुत्वा आश्चर्यम् अनुभवन्ती पूर्णिमा पार्श्वे एव द्वारस्य पृष्ठतः स्थितायाः पौत्र्याः मुखं दृष्टवती । तदा लता मन्दहासं प्रकटयन्ती अवदत् – ''एतौ प्रश्नौ न कठिनौ । वेणुगोपाल-स्वामिनः मन्दिरे प्रचलत् प्रवचनं सदा शृणोमि



अहम् । महाभारतस्य अपरं नाम अस्ति जयसंहिता इति, जयग्रन्थः इति वा । द्वितीयस्य प्रश्नस्य उत्तरम् एवम् अस्ति । भगवान् इच्छामरणं दत्तवान् स्यात् । तथापि जीवन-निर्वाहाय कोऽपि मार्गः एव यदा न दृश्यते तदा इच्छामरणं प्राप्तवता अपि जनेन मरणम् एव एष्टव्यं भवति अनन्यगतिकतया' 'इति ।

एतत् उत्तरद्वयं श्रुत्वा भुजङ्गशास्त्री नितरां सन्तुष्टः । सः लताम् अवदत् - ''वत्से ! भवत्याः उत्तरम् अपूर्वम् अस्ति । एतत् एव उत्तरं कागदे लिखित्वा ददातु । इदानीं चषकस्य विषयं वदामि । एतस्मिन् चषके घृतम् अस्ति । एतस्मात् श्वः सायङ्कालाभ्यन्तरे नवनीतं निर्माय दातव्यं भवत्या इति'' इति ।

एताम् अपेक्षां श्रुत्वा पूर्णिमा नितरां खिन्ना जाता । घृततः नवनीतनिर्माणं सर्वथा असाध्यम् इति अचिन्तयत् सा ।

किन्तु लता अल्पम् अपि खेदम् अप्राप्नुवती अवदत् - ''शास्त्रिवर्य ! एतस्मात् घृतात् अहम् अवश्यं नवनीतं निर्मास्यामि । श्वः सायङ्काले आगच्छतु भवान्'' इति ।

भुजङ्गशास्त्री स्वगतम् इव - ''विंशतिवर्षीया एषा घृतात् कथं वा नवनीतं निर्मातुं शक्नुयात् ? सर्वथा असम्भवं कार्यं खलु एतत् !'' इति वदन् ततः निर्गतवान् ।

लता रजतचषकस्थं घृतं स्वीकृत्य कलायचूर्णेन मिश्रीकृत्य खाद्यं निर्मितवती । अनन्तरदिने तत् विक्रीय प्राप्तेन धनेन नवतीतं क्रीतवती । तत् चषके स्थापितवती च ।

तद्दिने सायङ्काले भुजङ्गशास्त्री तत्र आगतः । लता प्रवृत्तं सर्वं निवेद्य नवनीतेन पूर्णं चषकं तस्मै दत्तवती । तदा भुजङ्गशास्त्री आश्चर्यं प्रकटयन् - ''नाजराजस्य गृहस्य स्नुषात्वं प्राप्तुं यानि लक्षणानि आवश्यकानि तानि सर्वाणि भवत्यां सन्ति'' इति उक्त्वा नगरं प्रति गतवान् । नागराजाय प्रश्नानाम् उत्तरं, नवनीतेन पूर्णं चषकं च दत्तवान् ।

एतस्मात् नागराजः नितरां सन्तुष्टः । बुद्धिमती विवेकिनी कन्या अन्विष्टा यत् तदर्थं भुजङ्गशास्त्रिणे धन्यवादान् समर्पितवान् सः । ततः सपरिवारं पूर्णिमायाः गृहं गतवान् सः ।

नागराजस्य ज्येष्ठाय पुत्राय लता अरोचत । एवमेव लतायै सोऽपि । अतः मासाभ्यन्तरे तयोः विवाहः सवैभवं सम्पन्नः ।



# वार्ताविशेषः



## मन्त्रोच्चारणम् अर्थपूर्णम्

गृहेषु अन्येषु स्थलेषु च ये धार्मिककार्यक्रमाः भवन्ति तेषु पुरोहितैः मन्त्राः उच्यन्ते । तेषां मन्त्राणाम् अर्थः कः इति श्रोतारः तु न जानन्ति, पुरोहिताः अपि न जानन्ति । तस्य मन्त्रस्य कथनस्य कः उद्देशः इति विवरीतुं न शक्नुवन्ति ते । किन्तु एषु दिनेषु परिस्थितिः परिवर्तमाना दृश्यते । पुणेनगरे स्थिता ज्ञानप्रबोधिनीनामिका संस्था तादृशान् पुरोहितान् सज्जीकरोति, ये च मन्त्राणाम् अर्थं प्रासङ्गिकतां च विवरीतुं शक्नुवन्ति । एते प्रशिक्षिताः पुरोहिताः सभ्यानां कृते अपि एकां लघुपुस्तिकां वितरन्ति । तस्मिन् मन्त्राः सार्थं विवृताः सन्ति । तान् मन्त्रान् दृष्ट्वा द्रष्टारः स्वयम् अपि मन्त्रान् उच्चारयितुम् अर्हन्ति । एतस्मात् नामकरणम्, उपनयनं, विवाहः, अन्त्येष्टिः इत्यादयः सर्वे कार्यक्रमाः अर्थपूर्णाः धार्मिकपरिसरमयाः च भवन्ति । एतादृशेषु प्रशिक्षणकार्यक्रमेषु वैद्याः, आभियान्त्रिकाः, न्यायवादिनः इत्यादयः अपि उपस्थिताः भवन्ति ।

## कृतज्ञताप्रदर्शनरीतिः

जेम्स् हरिसनः यदा १५ वर्षीयः आसीत् तदा तेन स्वस्य प्राणानां रक्षणाय अन्यदीयं रक्तं स्वीकृतम् । एषा घटना प्रवृत्ता ५१ वर्षेभ्यः पूर्वम् । तदवसरे तेन चिन्तितं यत् रक्तदानद्वारा मया कृतज्ञता प्रकाशनीया इति । ततः सः आस्ट्रेलियादेशे नवदक्षिणवेल्स्प्रदेशे स्थितां रेड्क्रास्संस्थां गत्वा रक्तदानम् आरब्धवान् । एतावता सः ८०० वारं (आहत्य ४८० लीटर्मितं रक्तं) दत्तवान् अस्ति । तदीयम् एतत् कृत्यं गिन्निस्संस्थाया अपूर्वत्वेन परिगणितम् अस्ति ।



# उत्तरप्रदेशीया जानपदकथा

भौगोलिकदृष्ट्या सांस्कृतिकदृष्ट्या च उत्तरप्रदेशः कामधेनुरूपः प्रदेशः अस्ति । महत् वैविध्यं दृश्यते अत्र । पुराणकालात् आरभ्य उत्तरप्रदेशः प्रसिद्धः अस्ति । भगवतः रामस्य कृष्णस्य च जन्मस्थानम् एतदेव । भगवान् बुद्धः, भगवान् महावीरश्च उत्तरप्रदेशे एव आस्ताम् । ऐतिहासिकदृष्ट्या अपि एतस्य महत्त्वं न न्यूनम् । अशोक-हर्ष-यवनराजानां केन्द्रस्थानम् आसीत् एषः एव उत्तरप्रदेशः ।

२३६,२८६ चतुरस्रकिलोमीटर्-परिमितः विस्तारः अस्ति एतस्य उत्तरप्रदेश-राज्यस्य । भारते विस्तारेण चतुर्थं स्थानम् अस्ति एतस्य । अत्रत्या जनसङ्ख्या अस्ति १६६,०५२, ८५९ । एतस्य पूर्वभागे बिहारराज्यम् अस्ति । दक्षिणभागे मध्य-प्रदेशः वर्तते । पश्चिमभागे राजस्थानं, देहली, हिमाचलप्रदेशः, हरियाणा च सन्ति । उत्तरभागे उत्तराञ्चलं नेपालं च दृश्यते ।

पवित्रं नदीद्वयं गङ्गा यमुना च अस्मिन् एव राज्ये प्रवहतः । अत्रत्याः अन्याः प्रमुखाः नद्यः सन्ति – गोमती, रामगङ्गा, घाघरा च । एतस्य राज्यस्य राजधानी अस्ति लक्नोनगरम् ।

## अब्दुल्लस्य सौभाग्यम्

सुल्तानपुरग्रामे अब्दुल्लः नाम कश्चन बालः वसति स्म । सः द्वादशवर्षीयः आसीत् । सः वलयितकेशः हसन्मुखः च आसीत् । सः परोपकारशीलः अपि आसीत् । प्रति-वेशिनां साहाय्यकरणे सर्वदा विशेषोत्साही आसीत् सः । प्रतिवेशिनां गृहोपयोगिवस्तूनां नयनायनं, शाकपाकवस्तुक्रयणादिकानि, अन्यविधानि कार्याणि चापि उत्साहेन सः करोति स्म । तेन यत् साहाय्यं कृतं तदर्थं किञ्चित् धनं यच्छन्ति स्म ते ।



एवं प्राप्तं धनं किं करणीयम् इति अब्दुल्लः न जानाति स्म । अतः सः कानिचन दिनानि मधुरखाद्यादिकं स्वीकृत्य खादितवान् । एतदनन्तरम् अपि तत्समीपे धनम् अवशिष्यते स्म । तस्मात् सः क्रीडनकानि क्रेतुम् आरब्धवान् । आरम्भे शब्द-जनकानि क्रीडनकानि एव सः क्रीतवान् । गच्छता कालेन क्रीडनक-क्रयणे तस्य आसक्तिः प्रवृद्धा । अतः सः विभिन्नानां क्रीडनकानां स्वीकरणम् आरब्धवान् । एवं तेन बहुविधानि क्रीडनकानि क्रीतानि । तस्य सङ्ग्रहणे बहवः सैनिकाः, गजाः, अश्वाः, रथाः च आसन् । एकैकस्य अपि नाम कृतम् आसीत् तेन ।



बहूनि दिनानि गतानि । क्रीडनकानां विषये तस्य मोहः नितरां प्रवृद्धः । अतः सः प्रतिवेशिनां कार्येषु अनासक्तः जातः । क्रीडनकैः सह एव क्रीडन् स्वस्य पूर्णं समयं यापयति स्म सः ।

उद्योगस्य अकरणात् आयः तु कोऽपि न आसीत् इदानीम् । अतः तस्य समीपे विद्यमानं धनं समग्रं व्ययितं जातम् । अकिञ्चनः जातः सः । कार्यमपि न करोति स्म सः खलु कुत्रापि ? धनाभावे उपवासः एव खलु शरणम् । आश्चर्यं नाम सः बुभुक्षाम् अपि सहते स्म विना क्लेशम् ।

यदा बुभुक्षा सोढुम् अशक्या जाता तदा सः प्रतिवेशिनां गृहं गत्वा कार्यदानं प्रार्थितवान् । सः नापितस्य सलीमस्य समीपं गत्वा - ''आर्य ! भवतः विपणिकार्ये अन्यविधकार्ये वा किम् अहं साहाय्यं कुर्याम् ? गतसप्ताहात् आरभ्य अहं किमपि कार्यं न कृतवान् । ह्यः आरभ्य मया किमपि न खादितम्'' इति उक्तवान् ।

अब्दुल्लः धनं कथं व्ययितवान् इति सलीमः सम्यक् जानाति स्म । तादृशस्य व्यर्थव्ययस्य विषये तस्य सहमतिः न आसीत् । तथापि सः तस्मिन् समये किमपि न उक्तवान् । खादितुं किमपि दत्तवान् । एवमेव अन्ये प्रतिवेशिनः अपि पर्यायरूपेण तस्मै आहारं ददति स्म ।

तस्य पितृव्यः ओमरः कदाचित् उक्तवान्



# अपूर्व ताजभवनम्



आग्रायां स्थितं ताजभवनं जगति अत्यन्तं सुन्दरी कलाकृतिः इति प्रसिद्धा वर्तते। आधुनिकजगतः सप्तसु आश्चर्यकरेषु अन्यतमत्वेन भाव्यते मार्बलद्वारा निर्मितम् एतत् ताजभवनम्।

चक्रवर्तिना शहजहानेन प्रियायाः पत्न्याः मुम्ताजायाः संस्मरणार्थम् एतत् ताजमहल् निर्मितम्। तस्याः शवस्य संस्थापनार्थं निर्मितम् एतत्। यदा १६६६ तमे वर्षे शहजहानः मृतः तदा तस्य शवम् अपि अत्रैव निखातम्।

यमुनानद्याः तीरे अस्ति ताजभवनम्। समग्रं भवनं श्वेतमार्बलशिलाभिः निर्मितम् अस्ति। एतस्य निर्माणार्थं २२ वर्षाणि अपेक्षितानि अभवन् इति श्रूयते। २०,००० अधिकाः कर्मकराः कार्यं कृत्वा क्रि.श. १६४८ तमे वर्षे एतस्य निर्माणं समापितवन्तः।

अराबिक्शैल्या निर्मितम् अस्ति एतत्। अत्रत्यः एकैकः भागः पार्थक्येन यदि परिशील्यते तर्हि अपि तत्तस्य सौन्दर्यम् अनुपमम् एव। यदि अन्यैः भागैः उपेतः सः परिशील्यते, तन्नाम अखण्डतया परिशील्यते, तर्हि अपि सौन्दर्यस्य हानिः तु न भवति।

एतस्याः कलाकृतेः अन्तर्भागः बहिर्भागश्च अत्युत्कृष्टाभिः अगेट्जास्परशिलाभिः निर्मिताभिः पुष्पाकृतिभिः पूर्णः अस्ति। एतस्य मुख्यभागाः पवित्रात् कुरानपुस्तकात् उद्धृतैः भागैः पुष्पाधारितकुशलकलाभिः च विराजन्ते। एतेन एतस्य भवनस्य चित्ताकर्षकता प्रवृद्धा अस्ति।

– ''वत्स! अब्दुल्ल! अहं भवते धनं तु न ददामि। परन्तु यदा बुभुक्षा भवति तदा भवान् निस्सङ्कोचम् अत्र आगत्य पितृव्यां भोजनं प्रष्टुम् अर्हति'' इति।

अब्दुल्लः निराशः जातः। यद्यपि तस्य भोजनस्य व्यवस्था जाता, तथापि तेन धनं तु न प्राप्तम्। अतः सः क्रीडनकं क्रेतुम् अशक्तः जातः। कीदृशं दुरदृष्टम्! सः क्रीडनकमोहात् अत्यन्तं पीडितः अभवत्। सः नूतन-क्रीडनकक्रयणार्थं धनसम्पादनाय यत्किमपि कर्तुं सिद्धः आसीत्।

सुल्तानपुरे केचन दुष्टाः आसन्, ये च एतस्य क्रीडनकमोहं सम्यक् जानन्ति स्म। ते विनोदं कर्तुं निश्चितवन्तः।

ते कदाचित् अब्दुल्लस्य समीपं गत्वा उक्तवन्तः – ''भोः! भवान् ग्रामजलागारस्य समीपे स्थितं भूतभवनं जानाति खलु? यदि भवान् तत्र एकरात्रं स्थातुं सिद्धः तर्हि वयं भवते शतं रूप्यकाणि रात्रिभोजनं च दातुं सिद्धाः। भवान् एतत् किम् अङ्गीकरोति?''

इति ।

एतत् श्रुत्वा अब्दुल्लः रोमाञ्चितः जातः । सः अचिन्तयत् यत् धनं प्राप्तुम् एषः अस्ति सरलः उपायः इति । अतः सः उक्तवान् – ''क्रीडनकक्रयणार्थं यदि भवन्तः धनं यच्छन्ति तर्हि अहं नरकं गन्तुम् अपि सिद्धः अस्मि'' इति ।

तस्यां रात्रौ ते बालाः तस्मै पाथेयं दत्तवन्तः । यदि अब्दुल्लः भूतभवने तां रात्रिं यापयेत् तर्हि तस्मै यानि शतं रूप्यकाणि दीयेरन् तानि अपि तस्मै दर्शितवन्तः ते । अनन्तरं ते तं तत्र नीतवन्तः ।

अब्दुल्लः कानिचन क्रीडनकानि नीतवान् आसीत् । सः तत् भवनं प्राप्य क्रीडनकानि आत्मानं परितः संस्थाप्य क्रीडायां मग्नः जातः । गच्छता कालेन सः इहप्रपञ्चं विस्मृत्य सम्पूर्णतया क्रीडायाम् एव संलग्नः जातः ।

तत् भवनं वस्तुतः चतुर्भिः भूतैः आक्रान्तम् आसीत् । ते बहु कुशलाः । ये अनवधानेन आगत्य तस्मिन् भवने रात्रिं यापयन्ति तान् भाययित्वा तेषाम् असहायकतां दृष्ट्वा आनन्दम् अनुभवन्ति स्म ते । मध्यरात्रे भूताः बहिः आगत्य आर्तनादं कुर्वन्ति स्म ।

यदा जनाः एतं शब्दं शृण्वन्ति तदा भयेन आक्रन्दनं कुर्वन्तः स्ववस्तूनि परित्यज्य बहिः धावन्ति स्म । तत् दृष्ट्वा भूताः सन्तोषेण हसन्तः अस्मासु अधिका भीतिः केन जनिता इति विषये चर्चां कुर्वन्ति स्म ।

ते भवनं प्रविश्य अब्दुल्लं दृष्टवन्तः । 'एषः भयेन भवनात् यत् धावेत् तत् तु नितराम् आनन्ददायकं भवेत्' इति परस्परं वदन्तः ते तं धावयितुम् इच्छन्तः उच्चस्वरेण चीत्कारं कृतवन्तः ।

भवनविषये, तत्रत्यस्य परिसरस्य विषये वा बालकस्य सम्पूर्णम् अनवधानं दृष्ट्वा ते नितराम् आश्चर्यचकिताः । आदौ ते विमनस्काः सञ्जाताः । अनन्तरं ते स्वस्य शक्तिः स्वातन्त्र्यं च बाधितम् इति कारणेन नितरां प्रक्षुब्धाः जाताः ।

अब्दुल्लः स्तम्भस्य पुरतः उपविष्टः आसीत् । ते तं प्रकोष्ठं प्रविश्य तं परितः





# करकुशलता

उत्तरप्रदेशः करकुशलवस्तूनां निमित्तं प्रसिद्धम् अस्ति । एतस्मिन् राज्ये वेणुनिर्मितवस्तूनां निर्माणम् आधिक्येन प्रचलति । कण्डोलाः, आधानिकाः, पीठोपकरणानि, भित्तौ तोलनयोग्यानि वस्तूनि इत्यादयः वेणुभिः निर्मीयन्ते अत्र ।

धातुभिः विविधवस्तूनां निर्माणम् अपि आधिक्येन प्रचलति अत्र । धातुमयवस्तूनां निर्माणविषये मुरादाबादनगरं प्रख्यातम् अस्ति । तेषु वस्तुषु यत् वर्णयोजनम् अत्र क्रियते तादृशं कार्यम् अन्यत्र कुत्रापि न दृश्यते ।

अत्र दृश्यमानानि अन्यानि करकौशलानि नाम - काष्ठशिल्पम्, शिलाशिल्पम्, वलयनिर्माणम्, आभरणनिर्माणम्, क्रीडनकनिर्माणम् इत्यादीनि ।

विभिन्नचलनवलनादिकं कुर्वन्तः तस्य अवधानम् आक्रष्टुं प्रयत्नं कृतवन्तः ।

एकः भूतः तस्य समीपं गत्वा उच्चैः आर्तनादं कृतवान् । अब्दुल्लस्य नेत्रे यद्यपि उद्घाटिते आस्तां तथापि तेन तिलमात्रेणापि अवधानं न दत्तम् । सः क्रीडनकादिषु एव मग्नः आसीत् ।

अल्पे एव काले सः 'अहं बुभुक्षितः अस्मि' इति स्मृतवान् । तस्मिन् अन्धकारे सः मित्रैः दत्तं पाथेयम् अन्विष्टवान् । हस्तं प्रसार्य सः पाथेयं प्राप्तवान् । ''अये ग्रन्थिनाथ ! आदौ भवतः पर्यायः'' इति वदन् सः पाथेयम् उद्घाटितवान् ।

तदा तस्य हस्तेन तण्डुलखाद्यं स्पृष्टम् । तत् स्वीकुर्वन् सः - '' मृद्वङ्ग ! इदानीं भवतः गिलनं करोमि'' इति उक्तवान् मन्दस्वरेण । ततः तेन पक्वम् अण्डं प्राप्तम् । सः तत् हस्तेन प्रीत्या स्पृशन् - ''अये खल्वाट ! अग्रिमः पर्यायः भवतः'' इति उक्तवान् ।

अन्ते सः रूक्षं सुपिष्टकखण्डं प्राप्तवान् । सः उक्तवान् - ''भवान् अस्ति रूक्षकायः । भवन्तमपि न त्यजाम्यहम्'' इति । ततः तदपि सः खादितवान् ।

सर्वं खादितं चेदपि तस्य उदरं न पूर्णम् । अतः न्यूनम् आहारं दत्तवन्ति मित्राणि तर्जयन् सः सुप्तः । क्षणाभ्यन्तरे एव सः निद्रामग्नः जातः ।

ते भूताः एतस्य तानि वचनानि श्रुत्वा भीत्या कम्पन्ते स्म । काकतालीयन्यायेन अब्दुल्लेन यानि पदानि प्रयुक्तानि तानि एव तेषां नामानि आसन् - ग्रन्थिनाथः, मृद्वङ्गः, खल्वाटः, रूक्षकायः चेति । ते भूताः अचिन्तयन् यत् एषः अस्मान् सर्वान् खादिष्यति एव इति ।

ते परस्परम् उक्तवन्तः - ''एषः सामान्यः मानवः न । एषः अस्मान् सर्वान् नाम्ना जानाति । एतम् अस्माकं सम्पदा तोषयित्वा वयम् इतः मुक्ताः भवेम'' इनि ।

ते प्रकोष्ठात् गत्वा बहुभ्यः वर्षेभ्यः सङ्गृहीतं सुवर्णरजतवस्तूनां राशिमेव आनीय तस्य पुरतः संस्थाप्य एवम् उक्तवन्तः - ''कृपया एतानि स्वीकृत्य अस्मान् विमुञ्चतु'' इति ।

अब्दुल्लः गाढनिद्रायां मग्नः आहाराणां स्वप्नं पश्यन् तेषां वाक्यानि न श्रुतवान् । सः बुभुक्षितः आसीत् । असन्तृप्त्या सः इतस्ततः लुठन् उच्चैः उक्तवान् - ''न । न त्यजाम्यहम् । अहं नितरां बुभुक्षितः अस्मि । मम हस्तगतं सर्वमपि अहं खादामि एव । एतत् तु निश्चितम्'' इति ।

एतानि वाक्यानि श्रुत्वा भूताः इतोऽपि भीताः जाताः । ते ग्रामसीमापर्यन्तं धावनं न स्थगितवन्तः ।

प्रभाते अब्दुल्लः उत्थाय परितः दृष्टवान् । अत्यमूल्यवस्तूनां मध्ये आत्मानं दृष्ट्वा सः नितराम् आश्चर्यचकितः जातः । प्रकाशमानानि सुवर्णरजतवस्तूनि ! रात्रौ किं जातम् इति तेन न किमपि अवगतम् । तेन एतावदेव ज्ञातं यत् मया अस्मिन् एकान्तभवने रात्रिः यापिता, निद्रा च आसादिता इति ।

क्षणकालस्य चिन्तनस्य अनन्तरं तेन अवगतं यत् अहं महाभाग्यशाली इति । पूर्वदिनस्य रात्रौ जीवरक्षणं यत् कृतं तदर्थं सः देवाय धन्यवादान् समर्पितवान् । सः तां सम्पदं गृहं नीत्वा मित्राणि आहूतवान् । सः तान् उक्तवान् - ''मम जीवने परिवर्तनं जायमानम् अस्ति'' इति ।

सः क्रीडनकमोहं त्यक्तवान् । दायित्वपूर्वकजीवनम् आरब्धवान् च ।

तस्मिन् जातम् एतत् परिवर्तनं दृष्ट्वा ग्रामीणाः सर्वे सन्तुष्टाः जाताः । 'केषाञ्चित् वर्षाणाम् अनन्तरम् एषः निश्चयेन उत्तमः नगरपालकः भविष्यति' इति ते चिन्तितवन्तः ।

'जनाः मयि स्थितस्य अभिमानस्य कारणतः एवं वदन्तः सन्ति । मया तादृशी योग्यता प्राप्तव्या इति तेषाम् आशयः । तां प्राप्तुं मया प्रयासः करणीयः' इति भावितवान् अब्दुल्लः ।





# पिशाचीनां सम्पत्

कस्यचित् पर्वतस्य समीपे केचन ग्रामाः आसन् । यदि नगरं गन्तव्यं तर्हि तत्रत्यैः अरण्यम् अतिक्रमणीयम् आसीत् एव । महावीरः कश्चन तद्ग्रामवासी । 'दिनद्वयस्य अनन्तरम् एव प्रत्यागमनं भवेत्' इति विचिन्त्य कदाचित् सः नगरं प्रति प्रस्थितवान् । किन्तु द्वितीये दिने मध्याह्नाभ्यन्तरे एव तस्य कार्यं समाप्तम् । अन्धकारप्रसारात् पूर्वम् एव ग्रामं प्राप्तुं शक्येत इति विचिन्त्य सः नगरात् प्रस्थितवान् ।

यदा सः अरण्यमार्गेण गच्छन् आसीत् तदा महती वृष्टिः आरब्धा । वृष्टेः स्थगनानन्तरं यदा सः प्रस्थितः तावता अन्धकारः प्रसृतः आसीत् । क्रूरमृगाणां ध्वनिः तदा तदा श्रूयते स्म । एतादृशे काले अरण्ये प्रयाणं न क्षेमाय इति सः अचिन्तयत् ।

तावता तेन कश्चन जीर्णः शिवालयः दृष्टः । अत्रैव वासः उचितः इति विचिन्त्य सः देवालयसमीपं गतवान् । तत्र तेन सर्पाणां फूत्कारः श्रुतः । अतः सः मन्दिरप्रवेशविचारं परित्यज्य समीपस्थं कञ्चित् महावृक्षम् आरुह्य उपविष्टवान् ।

यावत् तेन निद्रां कर्तुम् उद्युक्तं तावता वृक्षस्य अधः कश्चन कोलाहलः श्रुतः । महावीरः नेत्रे उन्मील्य अधः अपश्यत् । तदा तेन वृक्षस्य अधः उपविष्टाः काश्चन पिशाच्यः दृष्टाः । तासां दर्शनतः भीतः सः चीत्कर्तुम् उद्युक्तः । तथापि कथमपि आत्मानं निगृह्य आश्चर्ययुक्तया दृष्ट्या तासां व्यवहारं पश्यन् सः तत्रैव उपविष्टवान् ।

पिशाचीनां नायिका एकस्याः शिलायाः उपरि उपविष्टा आसीत् । तां परितः अन्याः पिशाच्यः उपविष्टाः आसन् ।

नायिका अन्याः पिशाचीः अवदत् – ''भवतीभिः या या सम्पत् आनीता सा दर्श्यताम्'' इति ।

भामहः

तदा एका पिशाची स्वस्य वस्त्रबन्धम् उद्घाट्य दर्शितवती । तत्रत्यं दृष्टवन्याः नायिकायाः नेत्रे विकसिते जाते । सा अवदत् - ''अहो, अपूर्वम्'' इति ।

अपरा पिशाची अपि वस्त्रबन्धस्थं दर्शितवती । तदा अपि नायिकायाः मुखात् स्वरः निर्गतः - ''साधु, साधु'' इति ।

अनन्तरं नायिकाः सर्वाः पिशाचीः उद्दिश्य उक्तवती - ''भवत्यः अपूर्वां सम्पदम् आनीतवत्यः । एतां प्राप्तुं भवत्यः महान्तं प्रयासं कृतवत्यः । एतां वयम् अद्य वृक्षस्य कोटरे स्थापयाम । श्वः रात्रौ पुनः अत्रैव अस्माकं मेलनम्'' इति ।

ततः नायिकायाः आदेशस्य अनुगुणं पिशाच्यः वस्त्रबन्धं वृक्षकोटरे स्थापितवत्यः । अनन्तरं हसन्त्यः नृत्यन्त्यः च ताः सर्वाः ततः निर्गतवत्यः ।

प्रातःकाले महावीरः वृक्षात् अवतीर्य कोटरं पश्यन् - 'छी, पिशाचीनां सम्पत् श्मशानभस्मसमानम् । अतः एषा मया न एष्टव्या' इति स्वगतम् उक्त्वा तां प्राप्तुम् इच्छां प्रयत्नं वा अकुर्वन् ततः निर्गतवान् ।

गृहं प्राप्य सः पत्नीं प्रवृत्तं सर्वम् उक्तवान् । तस्मिन् एव समये प्रतिवेशिनी दुर्गा शर्करां स्वीकर्तुं तस्य गृहम् आगता आसीत् । तया महावीरेण उक्तं सर्वं श्रुतम् ।

सा झटिति गृहं गत्वा पतिं चम्पापतिम् उक्तवती - ''सः महावीरः मन्दमतिः । तस्य शिरसि मृत्पिण्डम् अस्ति । भवान् अपि तादृशः एव । आवयोः विवाहस्य अनन्तरं दश वर्षाणि अतीतानि । तथापि मया मृन्मयाः वलयाः



एव ध्रियन्ते । भवान् इदानीम् एव अरण्यं गच्छतु । तत्र शिवालयस्य पार्श्वे स्थितस्य महावृक्षस्य कोटरे यः वस्त्रबन्धः पिशाचीभिः स्थापितः अस्ति तम् आनयतु । तस्मिन् वस्त्रबन्धे कीदृशी अमूल्या सम्पत्तिः अस्ति इति न ज्ञायते । सम्पत्तिः सर्वदा अमूल्या एव । मनुष्याणां सम्पत्तितः पिशाचीनां सम्पत्तिः अन्या न भवति'' इति ।

चम्पापतौ अपि सम्पत्तिलोभः उत्पन्नः । अतः सः तस्मिन् एव समये गृहात् निर्गत्य शिवालयपार्श्वस्थं वृक्षं प्राप्य तस्य कोटरे स्थितान् त्रीन् वस्त्रबन्धान् स्वीकृत्य रात्र्यभ्यन्तरे गृहं प्राप्तवान् ।

दुर्गा झटिति द्वारं पिधाय एकं वस्त्रबन्धम् उद्घाटितवती । तत्रत्यं वस्तु दृष्ट्वा सा उच्चैः आक्रोशनं कृतवती । यतः वस्त्रबन्धे आसीत्



कश्चन शुष्कः कपालः ! द्वितीये बन्धे केचन अस्थिखण्डाः आसन् । तृतीये वस्त्रबन्धे भस्म आसीत् ।

''अहो ! कीदृशः मूर्खः भवान् ! वस्त्रबन्धे किम् अस्ति इति तत्रैव द्रष्टव्यम् आसीत् खलु भवता ? एतावत् अपि अजानन् कीदृशः मूर्खः भवान्'' इति पतिं बहुधा तर्जितवती दुर्गा ।

चम्पापतिः मौनेन अतिष्ठत् । किञ्चित्-कालानन्तरं दुर्गा पतिं पुनः उक्तवती - ''पिशाच्यः एतानि वस्तूनि सम्पदं भावयन्ति । एतस्य तात्पर्यं सिद्धं यत् तासां दृष्ट्या एतत् मूल्यवत् एव इति । श्वः रात्रौ भवता पुनरपि तस्य वृक्षस्य समीपं गन्तव्यम् । निलीय स्थित्वा तासां सम्भाषणं श्रोतव्यम् । अनन्तरं ताः वक्तव्याः यत् प्रभूता सम्पत्तिः दत्ता चेदेव एतानि अमूल्यानि वस्तूनि प्रत्यर्प्यन्ते, न अन्यथा इति । तदा ताः सम्पत्तिं दद्युः एव । अवगतं खलु मया उक्तम् ?'' इति ।

अनन्यगतिकतया चम्पापतिः एतत् अङ्गीकृतवान् । अतः सः तान् त्रीन् अपि वस्त्रबन्धान् स्कन्धे आरोप्य पुनरपि अरण्यं गतवान् । तस्य महावृक्षस्य शाखायां निलीय स्थितवान् च ।

मध्यरात्रे तत्र आगताः पिशाच्यः वृक्षकोटरे वस्त्रग्रन्थिम् अप्राप्य उच्चैः उक्तवत्यः - ''अहो, चौर्यं जातम् अस्ति । अस्माकं सम्पत्तिः केनचित् नीता अस्ति । सर्वं विनष्टम् अस्ति'' इति ।

नायिका पिशाची कोटरे स्वयं स्वस्य हस्तं प्रसार्य परीक्षितवती । तत्र किमपि अप्राप्य सा अवदत् - ''महत् अनिष्टं प्रवृत्तम् ! मान्त्रिकः वराहनाथः यावत् जीवति स्म तावत् वयं तस्य केशान् अपि कम्पयितुं न शक्ताः । तस्य मरणानन्तरं तदीयानाम् अवशेषाणां भूमौ निखननं करणीयम् इति मया चिन्तितम् आसीत् । खेदस्य विषयः नाम तदपि कर्तुं न शक्तम् अस्माभिः । अहो, महत् दौर्भाग्यम् अस्माकम् !'' इति ।

'एषः एव योग्यः कालः' इति चिन्तयन् चम्पापतिः वृक्षात् अधः आगत्य - ''एतावती निराशता किमर्थम् ? धनं दीयते चेत् अहं भवतीनां सम्पत्तिं प्रत्यर्पयिष्यामि । सा च सम्पत्तिः मम समीपे अस्ति'' इति अवदत् धैर्येण ।

चम्पापतेः स्कन्धे स्थितं वस्त्रबन्धं दृष्ट्वा सन्तुष्टा पिशाचनायिका अवदत् - ''अस्माकं

समीपे धनं नास्ति । आभरणानि सन्ति । सद्यः एव प्राप्तानि तानि । एतानि स्वीकृत्य किं भवान् अस्माकं सम्पत्तिं प्रत्यर्पयेत् ?'' इति ।

''भवतु नाम । मम पत्नी तदा तदा आभरणानाम् एव स्मरणं कुर्वती भवति । धनं प्राप्य अपि मया आभरणानि एव कारणीयानि भवेयुः । आभरणानि एव प्राप्यन्ते चेत् सन्तोषः एव मम । आभरण-कारणश्रमः न्यूनः एव भवेत् तेन'' इति अवदत् चम्पापतिः ।

पिशाचनायिका आभरणानां ग्रन्थिं तस्मै दत्तवती । तस्यै कपालादिबन्धं दत्त्वा चम्पापतिः आभरणग्रन्थिम् उद्घाट्य दृष्टवान् । तत्र बहूनि आभरणानि आसन् ।

''अहो, एतावन्ति आभरणानि ! एतानि प्राप्य मम पत्नी नृत्यं करिष्यति आनन्देन । इतः परम् आभरणं दापयतु इति मां न पीडयिष्यति सा'' इति स्वगतं वदन् तम् आभरणग्रन्थिं स्वीकृत्य ततः निर्गतवान् चम्पापतिः ।

मध्यरात्रसमये सः ग्रामसीमां प्राप्तवान् । तदा उभौ रक्षकभटौ तं दृष्टवन्तौ । नगर-रक्षकेण प्रेषितौ आस्तां तौ । अरण्ये वासं कृत्वा चौर्यं कुर्वतां ग्रहणाय तौ तेन नियोजितौ आस्ताम् ।

तौ चम्पापतिं दर्शनसमनन्तरम् एव गृहीतवन्तौ । चम्पापतेः वस्त्रग्रन्थौ आभरणानि दृष्ट्वा तौ निश्चितवन्तौ यत् एषः महाचोरः एव इति । 'मया चौर्यं न कृतम्' इति वदन् चम्पापतिः स्वस्य निरपराधितां समर्थयितुं प्रयत्नं कृतवान् । किन्तु तौ एतस्य वचनं न श्रुतवन्तौ एव । तौ तं नगररक्षकसमीपं नीतवन्तौ । नगररक्षकः तं कारागारे स्थापितवान् ।

कारागारे तिष्ठन् चम्पापतिः पत्नीं मनसि एव निन्दितवान् – 'हा हन्त ! एतस्याः दुराशायाः कारणतः एव मया एषः कठिनः दण्डः प्राप्तः' इति ।

पत्युः कारागारवासः दुर्गया यदा ज्ञातः तदा सा दिग्भ्रान्ता जाता । 'मम दुराशायाः कारणतः एव मत्पतिना कारागारवासः प्राप्तः । दुराशा अपि पिशाचानां सम्पत् इव । तस्याः प्राप्त्या किं, स्पर्शतः अपि महती विपत्तिः सम्भवति । सर्वं मम दुष्कर्मणः फलम्' इति स्वगतं वदन्ती विलपितवती सा ।



# भारतम् अवगम्यताम्



१. उपरि दत्ते चित्रे स्थितः कः ? सार्वजनिकसेवानिमित्तं तेन १९९७ तमे वर्षे प्राप्तस्य अन्ताराष्ट्रियस्य पुरस्कारस्य नाम किम् ?

२. ओरिस्साराज्ये स्थितं तत् नगरं किं, यस्य च अर्थः स्थानीयायां मुण्डानामकानां वन्यजातीयानां भाषायां भवति - 'जनानां दुर्गम्' इति ।

३. दोरसमुद्रः दक्षिणभारतीयस्य कस्य राजवंशस्य राजधानी आसीत् ?

४. हिन्दुगृहेषु शुभावसरे आम्रपर्णैः तोरणं निर्मीयते । कस्य देवस्य निमित्तम् एतत् क्रियते ? तस्य देवस्य प्रियं फलम् अस्ति आम्रम् ।

५. पञ्जाबीयस्य यस्य दुर्गस्य उपरि स्थित्वा बन्दाबहादुरः सिक्खजनानां स्वातन्त्र्यम् उद्घोषितवान्, तस्य दुर्गस्य नाम किम् ?

६. बौद्धसंन्यासिनीनां निर्देशाय स्थितं नाम किम् ?

७ भारतीयं किञ्चन शुष्कम् उपस्करद्रव्यं पर्शियादेशे (इदानीन्तनं नाम 'इरान्' इति) 'लघु आणिः' इति निर्दिश्यते स्म । किं तत् द्रव्यम् ?

८. द्राविडभाषाणाम् उपयोगस्य आरम्भात् पूर्वं संस्कृतग्रन्थानां लेखनाय दक्षिणभारते का लिपिः उपयुज्यते स्म ?

९. अर्जुनप्रशस्तिं प्राप्तवान् प्रथमः क्रीडापटुः कः ?

१०. गान्धिवर्यः दण्डिप्रदेशे लवणनियमं विरुध्य पादयात्रां यदा कुर्वन् आसीत् तस्मिन् एव समये दक्षिणभारते तिरुच्चितः वेदारण्यं प्रति अपि तादृशी एव यात्रा प्रवृत्ता । तस्याः नायकः कः आसीत् ?

*(उत्तराणि अग्रिमे मासे)*

### *'नवम्बर्'मासस्य प्रश्नानाम् उत्तराणि*

१. १९५० -१९५१

२. ब्राह्मीभाषया ।

३. गान्धिवर्यः ।

४. रविदासः ।

५. अन्दमान्निकोबारद्वीपः ।

६. बालगङ्गाधरतिलकः ।

७. पञ्चवारम् ।

८. महाराष्ट्रे ।



# विघ्नेश्वरः

प्रसन्नवदना मोहना च क्रमशः सर्वाः मूर्तीः पश्यन्त्यौ अग्रे गतवत्यौ । कापि मूर्तिः तयोः इष्टाय न जाता । निराशतां प्राप्य यावत् ते प्रत्यागच्छन्त्यौ आस्तां तावता बहिः बालानां कोलाहलः श्रुतः ।

''तत्र अल्पमूल्यकैः वर्णैः सज्जीकृता काचित् मुर्तिः अस्ति । किं सा न दृश्यते भवतीभ्याम् ?'' इति अपृच्छत् कश्चित् ।

एतत् श्रुत्वा मोहना उक्तवती – ''भगिनि ! ताम् अपि पश्याव तावत् । अल्पमूल्यकवर्णैः निर्मिता प्रतिमा दर्शनायोग्या तु न खलु ?'' इति । ततः सा प्रसन्नवदनायाः हस्तं गृहीत्वा ततः प्रस्थिता । प्रदर्शनशालायां स्थिताः सर्वे स्त्रीपुरुषादयः ते अनुसृतवन्तः ।

विचित्रेण रचितायाः प्रतिमायाः पुरतः प्रसन्नवदना मुद्रायुक्तं स्यूतं स्थापयित्वा स्वस्य कण्ठे स्थितं रत्नहारम् अपनीय शिरः अवनमय्य उपविष्टवतः विचित्रस्य हस्ते वलयरूपेण अर्पितवती ।

एतां घटनां दृष्ट्वा सर्वे आश्चर्यचकिताः । ते परस्परम् उक्तवन्तः – ''एते युवती विलक्षणे इव भासेते । अपूर्वाः प्रतिमाः उपेक्ष्य एते दूरे स्थापितायाः सामान्यायाः प्रतिमायाः पुरतः धनम् अर्पितवत्यौ इति तु आश्चर्याय'' इति ।

एतदभ्यन्तरे प्रसन्नवदना तेषां शङ्कां निवारयन्ती इव अवदत् – ''अत्र स्थापितायां मूर्तौ यां विशेषतां दृष्ट्वा बालादयः आकृष्टाः अभवन् सा विशेषता अस्माभिः अपि लक्षिता । आवाम् अपि तया आकृष्टे स्वः । बालाः देवतासमानाः इति वचनं श्रूयते । तेषां व्यवहारः निष्कपटः भवति । अतः एव आवाम् अपि तैः चितां मूर्तिम् एव उत्कृष्टत्वेन



चितवत्यौ'' इति ।

मोहना अवदत् – ''मृत्तिकया निर्मिता मूर्तिः यत् रूपसौन्दर्यादिकं प्रतिबिम्बयितुं न अशक्नोत् तत् चित्रकारः कज्जलसुधादिभिः प्रदर्शितवान् अस्ति सुचारुतया । तस्मात् एव प्रतिमायाः अपूर्वता सिद्धा अस्ति । एतस्यै अपूर्वायै प्रतिमायै यं पुरस्कारम् आवां यच्छन्त्यौ स्वः सः वस्तुतः अल्पः इत्येव भासते'' इति ।

तस्मिन् एव समये विचित्रस्य मातापितरौ तत्र आगतौ । तौ उक्तवन्तौ – ''वत्स ! पावन ! वातापिगणपतेः कृपया आवयोः अन्वेषणम् अद्य सफलं जातम् । प्रौढतां प्राप्तवान् भवान् आवाभ्याम् अद्य प्राप्तः'' इति ।

एतावत् उक्त्वा तौ वृद्धौ तं प्रीत्या आलिङ्ग्य आनन्दाश्रूणि स्त्रावितवन्तौ । विचित्रः बाल्यावस्थाम् अतिक्रम्य यौवनावस्थां प्रविशन् आसीत् । सः अपि स्वस्य मातापितरौ दृष्ट्वा नितरां सन्तुष्टः । सः स्वस्य भूतकालीनं जीवनं स्मृतवान् । स्वस्य वास्तविकं नाम अपि तेन स्मृतम् । बहूनां वर्षाणाम् अनन्तरं जातं पितापुत्राणां मेलनं दृष्ट्वा प्रसन्नवदना नितरां सन्तुष्टा सती अवदत् - ''इदानीम् आवयोः इच्छा पूर्णा जाता । आवां प्रतिज्ञां निर्वर्तयितुम् इच्छावः'' इति ।

ततः अल्पे एव काले जनैः मण्डपः रचितः । रङ्गमञ्चः अपि सज्जीकृतः । प्रसन्नवदना विनायकप्रतिमायाः पार्श्वे उपविश्य तालं वादयन्ती – ''ताण्डवनृत्यं कुरु गजानन !...'' इति कीर्तनम् आरब्धवती । मोहना मञ्चम् आरुह्य विद्युल्लता इव सञ्चरन्ती नृत्यम् आरब्धवती । गानं श्रुत्वा नृत्यं च दृष्ट्वा जनाः तन्मयाः सन्तः आनन्दसागरे निमग्नाः अभवन् ।

प्रसन्नवदनायाः गानं गजाननपण्डितेनापि श्रुतम् । सः शतवर्षीयः जातः आसीत् । अतः गृहात् अन्यत्र गन्तुं सामर्थ्यं न आसीत् तस्य । तथापि न ज्ञायते कुतः शक्तिः प्राप्ता इति, सः धावन् इव नृत्यमण्डपसमीपम् आगतः । प्रसन्नवदनां प्रणम्य नमस्कारभङ्ग्या एव उपविश्य गानस्य श्रवणे मग्नः जातः ।

नृत्यं कुर्वती एव मोहना तां महाभारयुतां विनायकमूर्तिं लीलया उन्नीय स्कन्धेन धृतवती । एतत् दृष्ट्वा जनाः ताम् उक्तवन्तः – ''आर्ये ! मूर्तेः भारः भवत्या वोढुं न शक्येत'' इति ।

तदा मोहना – ''एतस्याः वहनं न कष्टाय मम'' इति वदन्ती मूर्तिम् उन्नीय एव नृत्यं कुर्वती ततः प्रस्थितवती । सर्वे जनाः ताम् अनुसृतवन्तः । एतस्मिन् कोलाहले केनापि न

लक्षितं यत् प्रसन्नवदना कदा कथम् अदृश्यतां गता इति ।

ध्यानमुद्रायां स्थितः गजाननपण्डितः यदा नेत्रे उन्मीलितवान् तदा आत्मनः पुरतः स्थितं स्वर्णमुद्रायुक्तं कौशेयस्यूतं दृष्टवान् । तस्य पादयोः पुरतः विचित्रः जानुभ्याम् उपविष्टः आसीत् ।

गजाननपण्डितः विचित्रम् अवदत् - ''भवान् मन्दिरस्य भित्तिषु गणेशस्य विविधाः लीलाः चित्रयतु । एतदर्थं यावत् धनम् आवश्यकं तावत् प्रसन्नवदनः विनायकः दत्तवान् अस्ति खलु ?'' इति ।

एतदनन्तरं गजाननपण्डितः उत्थाय विचित्रम् आत्मना सह नयन् जनयात्राम् अनुसृतवान् ।

मोहना मूर्तिं स्वीकृत्य मन्दिरस्य पार्श्वे स्थितं तडागं प्राप्तवती । तडागस्य सोपानेषु एकैकशः पदं स्थापयन्ती सा अदृश्या जाता । तस्याः स्थाने कश्चन मूषकः दृष्टः । सः स्वस्य पृष्ठेन तां मूर्तिं वहन् जले निमग्नः जातः । तस्मिन् दिने सर्वासां प्रतिमानां निमज्जनोत्सवः निश्चितः आसीत् ।

मूर्तिः यदा तडागमध्यं गता तदा सा अपूर्वेण प्रकाशपुञ्जेन शोभमाना जाता । अभयहस्त-मुद्रया युक्तः विघ्नेश्वरः तत्र सर्वैः दृष्टः । क्षणानन्तरं सः अन्तर्हितः जातः ।

गजाननपण्डितः विचित्रं गाढम् आलिङ्ग्य अवदत् - ''वत्स ! पावन ! भवतः कारणतः वातापिनगरं पावनतां प्राप्नोत् । तस्मात् अद्य आरभ्य पावनमिश्रनाम्ना भवान् ख्यातः भविष्यति ।''





एतावत् उक्त्वा पावनमिश्रः कथनम् अनुवर्तितवान् - ''गर्भगृहस्य मुखद्वारे महाभारतकथायाः प्रदर्शकं यत् चित्रम् अस्ति ...।''

पावनमिश्रस्य कथनस्य समाप्तितः पूर्वम् एव सः युवा चित्रकारः ''गुरुदेव !'' इति वदन् पावनमिश्रस्य चरणौ स्पृष्ट्वा अवदत् - ''भवत्सम्बद्धं पावनं चरितं श्रुतवान् अहं धन्यताम् अनुभवामि । मम नाम आनन्दः इति । भवतः नाम्नः आदिमयोः अक्षरयोः स्थानपरिवर्तनं कृत्वा मम नाम्नि योजयित्वा आत्मानं 'वपानन्दः' इति निर्दिशामि । एतस्मिन् पावनमण्डपे स्थितानां चित्राणां प्रतिकृतीः अहं रचयिष्यामि । भवता याः कथाः श्राविताः ताः अग्रिमां जनपरम्परां श्रावयिष्यामि । माम् आशीर्वादेन अनुगृह्णातु कृपया'' इति ।

नमस्कारभङ्ग्या स्थितस्य तस्य शिरसः उपरि आशीर्वादसूचकं हस्तं स्थापयित्वा मन्दहासं प्रकटयन् वृद्धः पावनमिश्रः कथनम् अनुवर्तितवान् - ''आत्मना रचयिष्यमाणस्य महाभारतस्य लेखकः कः भवितुम् अर्हति इति चिन्तयन् आसीत् व्यासमुनिः । तदा ब्रह्मा तस्य पुरतः प्रत्यक्षीभूय अवदत् यत् विघ्नेश्वरं लेखकं करोतु इति । ब्रह्मणः आदेशस्य अनुसारेण व्यासमुनिः गणेशं प्रार्थितवान् - 'भवान् महाभारतस्य लेखकः भवतु' इति ।

विघ्नेश्वरः प्रसन्नः सन् अवदत् - ''महर्षिवर्य ! भवतः प्रार्थना अङ्गीक्रियते मया । किन्तु नियमः अस्ति यत् लेखनसमये सकृत् अपि भवता मम दिशि दृष्टिः न प्रसारणीया इति'' इति ।

व्यासेन एषः नियमः अङ्गीकृतः । ततः महाभारतलेखनम् आरब्धम् ।

विघ्नेश्वरः स्वस्य दन्तस्य खण्डम् एव लेखनीत्वेन उपयुञ्जानः लिखति स्म । व्यासः अर्धनिमीलितनेत्रः निरन्तरं कथां कथयति स्म ।

पुरतः स्थितस्य हिमालयस्य उपत्यकाभ्यः निर्गच्छन्त्यः निर्झर्यः मन्द्रगम्भीरस्वरम् उत्पादयन्त्यः मध्यमावतीरागस्य श्रुतिं योजयन्ति स्म इव । देवदारुवृक्षाः शिरः कम्पयन्ति स्म । महाभारतरचना निर्विघ्नम् अनुवर्तते स्म ।

जन्मान्धः धृतराष्ट्रः हस्तिनापुरस्य सिंहासनम् आरूढवान् । तस्य अनुजः पाण्डुः साम्राज्यस्य निर्वहणभारं वहन् राज्यस्य विस्तारं कृतवान् । गच्छता कालेन पाण्डोः पञ्च पुत्राः जाताः । धृतराष्ट्रेण शतं पुत्राः प्राप्ताः ।

आ बाल्यात् एव कौरवपाण्डवयोः मध्ये ईर्ष्या प्रवर्धमाना आसीत् ......।

व्यासः कथां श्रावयति स्म, विघ्नेश्वरश्च तां यथावत् लिखति स्म । सभापर्वणः रचना प्रचलति स्म ।

मयसभायाम् अपमानं प्राप्तवान् दुर्योधनः प्रतीकारबुद्ध्या पाण्डवान् द्यूते प्रवर्तयन् द्रौपदीं जितवान् । द्रौपद्याः वस्त्रस्य अपहरणाय मतिं कृतवान् च ।

एतस्मात् नितरां क्रुद्धः भीमः प्रतिज्ञां कृतवान् यत् दुर्योधनस्य ऊरोः भङ्गं करिष्यामि, दुश्शासनस्य उरस्तः रक्तं पास्यामि इति ।

पाण्डवाः वनवासं समाप्य राज्ञः विराटस्य आस्थाने वसन्तः अज्ञातवासम् आरब्धवन्तः । सैरन्ध्रीरूपेण वसन्त्याः द्रौपद्याः अपमाननं कृतवान् कीचकः । तस्मात् भीमः तस्य वधं कृतवान् । बृहन्नलारूपेण स्थितः अर्जुनः उत्तरगोग्रहणप्रसङ्गे कौरवसेनां पराजितवान् ।

अभिमन्यु-उत्तरयोः विवाहः सम्पन्नः । दूत-रूपेण गतः कृष्णः पाण्डवेभ्यः पञ्च ग्रामान् प्रार्थितवान् । किन्तु दुर्योधनः 'सूच्यग्रस्थां भूमिम् अपि न दास्यामि' इति उक्तवान् ।

युद्धम् अनिवार्यं जातम् । श्रीकृष्णः अर्जुनस्य सारथिः जातः । रणाङ्गणे सः अर्जुनं भगवद्गीताम् उपदिष्टवान् ।

भीष्मः शरशय्याम् आश्रितवान् । द्रोणाचार्यः पद्मव्यूहस्य रचनां कृतवान् । सर्वे कौरवाः सम्भूय अन्याय्येन अभिमन्योः वधं कृतवन्तः । सुभद्रा पुत्रवियोगसन्तप्ता जाता ।

अर्जुनः स्वस्य शौर्यं पराक्रमं च दर्शित-वान् । धृष्टद्युम्नः द्रोणस्य शिरः कर्तितवान् । दुर्योधनः कर्णस्य बलं पराक्रमं च अवलम्बित-वान् आसीत् । कर्णस्य मृत्युः यदा जातः तदा



सः नितरां निराशः जातः । भीमः दुश्शासनस्य वधं कृतवान् । दुर्योधनस्य ऊर्वोः भङ्गः अपि तेन कृतः ।

द्यूते पराजितः युधिष्ठिरः भ्रातॄणां साहाय्येन घोरं युद्धं कृत्वा कौरवान् पराजित्य विजय-दुन्दुभिं वादितवान् ।

श्रीकृष्णः स्वस्य अवतारम् उपसंहृतवान् ।

परीक्षितं सिंहासने उपावेश्य पाण्डवाः द्रौपद्या सह महाप्रस्थानं कृतवन्तः ।

धर्मः कदापि पराजितः न भवति, सदा धर्मस्यैव जयः इत्येतत् सत्यं प्रमाणीकुर्वन् युधिष्ठिरः मेरुशिखरे स्थितवान् ।

जलप्रपातस्य ध्वनिः क्षीणतां गतः । व्यासेन उच्यमानां कथां गणेशः लिखति, उत गणेशेन लिख्यमानां कथां व्यासः वदति इत्येतस्य निर्णयः कठिनः एव आसीत् ।

सत्यलोके ब्रह्मा पद्मासनेन उपविष्टः सन्

सन्तुष्ट्या मन्दहासं प्रकटयन् सरस्वतीं प्रति सार्थकतासूचिकां दृष्टिं प्रसारितवान् । सरस्वती वीणायाः तन्त्रीः स्पृष्ट्वा झङ्कृतिम् उत्पाद्य श्रीरागस्य आलापनम् आरब्धवती ।

महाभारतकथालेखनं समाप्तप्रायम् आसीत् । अन्तिमस्य पर्वणः रचनं प्रचलति स्म । सरस्वतीदेवी मङ्गलाचरणरूपेण श्रीरागस्य आलापनं सत्यलोके यत् कृतवती तस्मात् व्यासमहर्षिः विघ्नभावं प्राप्तवान् ।

कथारचनम् इतोऽपि न समाप्तम् आसीत् । तदा व्यासमहर्षिः अन्यमनस्कः सन् लेखकं विघ्नेश्वरम् अपश्यत् । अनन्तरक्षणे एव विघ्नेश्वरः अन्तर्हितः जातः ।

महाभारतग्रन्थस्य उपरि अक्षताः इव आकाशतः पुष्पाणि पतितानि ।

व्यासमुनिः ग्रन्थम् उद्घाट्य कातरतया अपश्यत् । तेन यत् रचनीयम् इति चिन्तितम् आसीत् तत्सर्वम् एतावता एव ग्रन्थे लिखितं दृश्यते स्म । व्यासमहर्षिः आश्चर्येण आनन्देन च पुलकितः जातः । तावता 'महती 'वीणातः हंसध्वनिरागः श्रुतः ।

नारदमहर्षिः तत्र उपस्थितः सन् अपृच्छत् – ''महर्षे, महाभारतरचनाकार ! आश्चर्य-पुरस्सरं किं दृश्यते भवता ?'' इति ।

व्यासमुनिः प्रवृत्तं सर्वं निवेदितवान् ।

तदा नारदः अवदत् – ''भवता यत् वक्तव्यत्वेन चिन्तितम् आसीत् तत् भवतः कथनात् पूर्वम् एव लेखकः लिखितवान् अस्ति । एवं ननु ?'' इति अपृच्छत् नारदः ।

''आं नारदवर्य ! तथैव प्रवृत्तम् । एतादृशः लेखकः सर्वथा नास्ति अन्यः । एतं लेखकत्वेन प्राप्तवान् अहं धन्यः । मम सङ्कल्पः सिद्धः अस्ति । अतः महाभारतग्रन्थम् अहं 'जय'-नाम्ना अपि निर्देष्टुम् इच्छामि'' इति वदन् व्यासः विघ्नेश्वरस्य ध्यानं कृतवान् ।

महाभारतसमीपे किञ्चन विशालं ज्योतिः दृष्टम् । तत्र विघ्नेश्वरः प्रत्यक्षः भूत्वा अवदत् – ''व्यासमहर्षिवर्य । भवता लिखितं काव्यं सर्वत्र प्रशंसापात्रं भविष्यति । पञ्चमवेदत्वेन ख्यातं भविष्यति च'' इति । ततः सः व्यासम् आशीर्वादेन अनुगृह्य ततः अन्तर्हितः जातः ।

विघ्नेश्वरेण दन्तैः लिखितं तत् महाभारतं सर्वेषु युगेषु नक्षत्राणां गणे चन्द्रमाः इव साहित्य-क्षेत्रे सर्वोत्कृष्टतया विराजते । *– (समाप्तम्)*





# भार्गवस्य तपः

बहुभ्यः वर्षेभ्यः पूर्व प्रवृत्ता कथा एषा । द्रविडदेशे कश्चन पण्डितः आसीत् । तस्य चत्वारः पुत्राः । तेषु त्रयः पितुः सकाशात् एव शिक्षणं प्राप्तवन्तः । किन्तु चतुर्थः किमपि शिक्षणं न प्राप्तवान् । पितुः प्रयत्नः सर्वः विफलः अभवत् । सः निरक्षरः सञ्जातः ।

पण्डितः सर्वदा चतुर्थपुत्रस्य भार्गवस्य विषये एव चिन्तां करोति स्म । आगताः सर्वे ज्येष्ठपुत्रान् त्रीन् अपि आदरेण पश्यन्ति स्म, भार्गवं तु तिरस्कारेण ।

'तिरस्कारः एषः मयि स्थितस्य अज्ञानस्य' इति भार्गवः जानाति स्म एव । अनेन सः महतीं चिन्तां प्राप्नोति । तया एव चिन्तया सः पठितुम् उद्युक्तः भवति अपि । किन्तु पठनस्य आरम्भः यदा भवति तदा एव तस्य मनसि अन्यान्यविषयाः उद्भवन्ति । तान् चिन्तयतः तस्य मनः पठनं विस्मरति स्म ।

भार्गवस्य पित्रा कदाचित् चिन्तितं यत् प्रायः मम अध्यापने कोऽपि दोषः स्यात्, अतः एतम् अन्यगुरुद्वारा पाठयामि चेत् सफलता स्यात् इति । अतः सः स्वपुत्रम् अन्यं गुरुकुलं प्रति प्रेषितवान् । तत्र भार्गवः पशुपालनादिकार्यं, सस्यादिसंरक्षणकार्यं च सम्यग् अभ्यस्तवान् विना शिक्षणम् ।

एतादृशे अवसरे एका घटना घटिता । भार्गवस्य द्वितीयाग्रजस्य विवाहार्थं प्रयत्नः प्राचलत् । तदा वधूपक्षीयाः केचन तस्य गृहम् आगताः । ते भार्गवं दृष्ट्वा तस्य विषये प्रश्नं कृतवन्तः ।

भार्गवस्य पिता उत्तरयितुम् उद्युक्तः ।





तावति काले भार्गवस्य ज्येष्ठा भ्रातृजाया उपहासमिश्रितेन स्वरेण उक्तवती – ''एषः मम कनिष्ठः देवरः । वाल्मीकिरिव पण्डितः'' इति ।

भार्गवः अनेन वाक्येन ज्ञातवान् यत् भ्रातृजाया मां 'वाल्मीकिः तपसः पूर्वं यथा आसीत्, तादृशः अहमिति सूचितवती' इति । लज्जितः सः विना वचनं ततः प्रस्थाय ग्रामात् बहिः आगतः ।

मार्गे तस्य चिन्तनम् आरब्धम् – 'कश्चन व्याधः तपसा वाल्मीकिः अभवत् । अतः मया अपि किमर्थं तपसा महापुरुषेण न भवितव्यम् ?' इति । एवं चिन्तयता तेन गृहगमनविषयं त्यक्त्वा समीपस्थम् अरण्यं प्रति प्रस्थितम् ।

सूर्योदयस्य घण्टायाः अनन्तरं सः अरण्ये कस्यचन ऋषेः आश्रमम् अपश्यत् । आश्रमे ऋषिः ध्यानमग्नः आसीत् । कस्यचित् वट-वृक्षस्य अधः उपविश्य भार्गवः अपि ध्याने मग्नः । किन्तु सायम् अपि सः ऋषिः ध्यानात् विमुखः न अभवत् एव ।

सूर्यास्तः जातः । ऋषेः ध्यानं समाप्तम् । तेन नेत्रे उद्घाट्य वतसृषु दिक्षु दृष्टिः प्रसारिता ।

तदा भार्गवः ऋषेः समीपम् आगत्य साष्टाङ्गं प्रणम्य स्वविषयं सविस्तरं निवेद्य अवदत् – ''मुनिवर्य, स्वकीयाः एव माम् उपहसन्ति । अतः मम जीवने विरक्तिः उत्पन्ना । मया चिन्तितं यत् अहं विद्यावान् नास्मि चेदपि भगवतः ध्याने तु मम अधिकारः स्यादेव इति । तस्मात् अहं भवतः समीपम् आगतः । तपसा एव जीवनं यापयितुम् इच्छामि अहम् । मयि प्रसन्नः भवतु । तपः कर्तुं या शक्तिः अपेक्षिता सा मह्यं भवता दातव्या । एकाग्र-चित्ततया तपः कर्तुं मह्यं वरः दीयताम्'' इति ।

भार्गवस्य वचनं सश्रद्धं श्रुतवता मुनिना उक्तम् – ''पुत्र ! मनुष्यः आदौ गृहस्थाश्रमं प्रविश्य तदनन्तरं वानप्रस्थाश्रमं स्वीकुर्यात् इति तु भगवतः निर्देशः । लघुविषयमेव दीर्घीकृत्य जीवने विरक्तः सन् भवान् भगवन्निर्दिष्टस्य जीवनधर्मस्य अतिक्रमणं करोति चेत् तत् प्रकृतिविरुद्धम्'' इति ।

भार्गवः मुनिवचनम् अनङ्गीकुर्वन् पुनः तं निवेदितवान् – ''श्रीमन् । एवं न वक्तव्यम् भवता । भगवतः ध्याने मग्नेन सता प्रशान्तं जीवनं यापनीयम् इति मया निर्णयः कृतः अस्ति । एतादृशमेव जीवनम् अहम् इच्छामि'' इति ।

तदा मुनिना उक्तम् - ''भार्गव ! अहम् इदानीं नदीं गच्छन् अस्मि स्नानार्थम् । श्वः अस्मिन्नेव समये भवान् पुनः आगच्छतु'' इति ।

परेद्यवि भार्गवं पश्यन् ऋषिः हसन् पृष्टवान् - ''पुत्र ! तपसः पूर्वं गृहस्थाश्रमं प्राप्तुं भवान् न सिद्धः चेत् चिन्ता नास्ति । किन्तु भवतः शरीरं परिश्रमेण दृढं भवेत् । तदर्थं भवान् सिद्धः किम् ?'' इति ।

भार्गवः स्वसम्मतिं सूचितवान् । ततः ऋषिः - ''मया सह आगच्छतु'' इति वदन् तम् एकं ग्रामं नीतवान् ।

ग्रामे कश्चन वृद्धः गृहस्य अङ्गणे उपविष्टः आसीत् । सः ऋषिं दृष्ट्वा प्रणामं समर्पयन् उत्थितः ।

ऋषिः तं वृद्धम् उक्तवान् - ''लोकनाथ ! भवता कश्चन उपकारः करणीयः । अस्य तरुणस्य नाम भार्गवः इति । भवता भवदधीने स्थिते भूप्रदेशे एकर्परिमितः भूप्रदेशः कृष्यर्थं वर्षपर्यन्तम् अस्मै दातव्यः । अनेन कृषिकार्यं भवता एव कारणीयम् । कृषिकार्यात् यावत् धान्यं लप्स्यते तस्य विक्रयणादिकमपि भवतः दायित्वम्'' इति ।

लोकनाथः ऋषिवाक्यं सादरं स्वीकृतवान् । ऋषिः प्रतिगमनात् पूर्वं भार्गवम् उक्तवान् - ''भोः, श्रुतं किल सर्वम् अपि ? वर्षपर्यन्तं लोकनाथस्य शिष्यः भूत्वा यथाशक्ति परिश्रमं करोतु । वर्षानन्तरं मम समीपम् आगच्छतु'' इति ।

भार्गवः वर्षमेकं परिश्रमं कृतवान् । तेन एकर्परिमितायां कृषिभूमौ अनेकविधानि



फलानि धान्यानि च वर्धितानि । लोकनाथः अन्ये सर्वे ग्रामीणाः चापि भार्गवं बहुधा प्रशंसितवन्तः ।

वर्षमेकं समाप्तम् । भार्गवः कण्डोलं विविधैः फलैः सम्पूर्य ऋषिसमीपं गतवान् । ऋषये फलं समर्प्य सः तं नमस्कृतवान् ।

ऋषिः मन्दहासेन पृष्टवान् - ''भार्गव ! कथयतु । जीवने भवति या विरक्तिः उत्पन्ना आसीत् सा इदानीमपि अस्ति, उत परिवर्तनं किमपि दृश्यते ?'' इति ।

तदा भार्गवः सन्तोषेण उक्तवान् - ''स्वामिन् । मयि महत् परिवर्तनं जातम् अस्ति । अस्य ग्रामस्य राममन्दिरे स्थितः अर्चकः स्वपुत्रीं मह्यं दातुम् इच्छति'' इति ।

''एवं तर्हि भवान् तपोजीवनं विहाय गृहस्थः भवितुम् इच्छति ? किम् एतत्

आश्चर्यम् !'' इति पृष्टवान् ऋषिः ।

तदा भार्गवः शिरः अवनमय्य सङ्कोचेन उक्तवान् – ''स्वामिन् ! यदि भवतः आशीर्वादः भविष्यति तर्हि अहं गृहस्थः भवितुम् इच्छामि'' इति ।

ऋषिः 'तथास्तु' इति आशीर्वादवचनम् उच्चारयन् उक्तवान् – ''भवति यत् परिवर्तनं सञ्जातं तेन अहं सन्तुष्टः अस्मि । एतत् परिवर्तनम् आनेतुम् एव अहं भवन्तं लोकनाथस्य समीपं नीतवान् । मम प्रयत्नः सफलः सञ्जातः । मानवः सर्वदा सुखेन शान्त्या च जीवनं यापयितुम् इच्छति । एतदर्थं सः सुशिक्षितः भवेत् एव इति नियमः नास्ति । जीवनस्य याथार्थ्यं जानीयात्, तावदेव । मानवानां चिन्तने वैविध्यं वर्तते । तेषाम् अभिरुचयः अपि विभिन्ना एव । परिश्रमोऽपि तपः एव । पूर्वं भवता उक्तम् आसीत् – 'पशुपालने सस्यादिवर्धने च मम आसक्तिः अस्ति' इति । तत् भवान् स्मरति एव खलु ?'' इति ।

''आम्, स्मरामि'' इति सोत्साहम् उक्तवान् भार्गवः ।

''भवतः एतत् वाक्येनैव मया चिन्तितं यत् भवान् कृषिक्षेत्रे योजनीयः इति । एतत् सर्वं मातापितृभ्यां चिन्तनीयम् । पुत्राणां मतं किम्, तेषाम् अभिरुचिः का इत्यादिकं तैः अवगन्तव्यम् । किन्तु दौर्भाग्येण भवतः मातापितरौ एतत् न चिन्तितवन्तौ । यदा मातापितॄणां प्रोत्साहः न लभ्यते तदा भवादृशाः तपसः वैराग्यस्य च विषये आसक्ताः भवन्ति । इदानीं सत्यं वदतु – मया भवते तपसः मार्गः बोधितः उत न इति'' इति भार्गवं पृष्टवान् ऋषिः ।

ऋषेः अर्थगर्भितं वाक्यं श्रुत्वा भार्गवस्य नेत्रयोः अश्रूणि आगतानि । सः शिरसा अञ्जलिं बद्ध्वा तम् ऋषिं नमस्कुर्वन् – ''इदानीं मयि कोऽपि संशयः नास्ति । भवतः उपदेशं सर्वदा स्मरामि । मादृशाः ये जीवने जुगुप्सिताः भवन्ति तादृशाः यदि मिलन्ति तर्हि तान् अपि योग्यं मार्गं बोधयितुं प्रयत्नम् अपि करिष्यामि । मया इदानीं गम्यते । अनुज्ञातव्यः अहम्'' इति उक्तवान् ।

ऋषिः तम् आशीर्वादेन अनुगृहीतवान् । नितरां सन्तुष्टः भार्गवः ततः निर्गतवान् ।





# कथाकार:

शारदापुरनामके ग्रामे शिवो नाम कश्चन कथाकथकः आसीत् । तेन कथाः रोचकतया कथ्यन्ते स्म । तदीया कापि कथा नीरसतां न जनयति स्म । सः यदा कथां वक्तुं प्रवृतः भवति तदा सर्वे मन्त्रमुग्धाः इव शृण्वन्ति स्म । पुनः पुनः तस्य कथाः श्रोतुम् इच्छन्ति स्म च । कथायाः समापनमेव तेषां मनसि निराशतां जनयति स्म ।

ग्रामे बालाः भोजनावसरे, अन्यान्य-कारणेन वा यदि अनुक्तग्राहितां प्रदर्शयन्ति तर्हि तेषां मातापितरः तान् शिवस्य समीपं नयन्ति स्म । शिवः तान् कथाः उक्त्वा तेषां मनः विमलीकरोति स्म । बालाः यदा श्रद्धया कथाः श्रोतुम् उद्युक्ताः भवन्ति तदा मातरः तान् भोजयन्ति स्म । बालान् कथाः वक्तुं शिवोऽपि इच्छति स्म । तेन आनन्दमपि अनुभवति स्म सः ।

रामापुरनामके ग्रामे प्रतापनारारणः नाम कश्चन भूस्वामी आसीत् । सः महाधनिकः । समीपस्थेषु ग्रामेषु तादृशः अन्यः न आसीत् । कदाचित् सः अस्वस्थः सन् शय्याम् आश्रितवान् । अस्वास्थ्येन मनसः शान्तिरपि नष्टा तस्य । महान्तः वैद्याः तस्य चिकित्सां कृतवन्तः । तथापि कोऽपि लाभः न जातः । वैद्यैः सूचितं यत् मनः शान्तं यदि भवति तर्हि एव एषः स्वस्थः भविष्यति इति ।

भूस्वामी सङ्गीतश्रवणेन मनसः शान्तिं सम्पादयितुं प्रयत्नं कृतवान् । रामायणादीन् अपि श्रुतवान् । किन्तु सर्वमपि व्यर्थमेव अभवत् । तस्य मनः शान्तं न अभवत् एव ।

अत्रान्तरे तेन शारदापुरीयस्य शिवस्य विषयः श्रुतः । सः तम् आनायितवान् । शिवः तत्र आगत्य तदीये भवने एव वसन् सप्ताहपर्यन्तं रोचिकाः कथाः निरन्तरं श्रावितवान् ।



शिवस्य कथाः प्रतापनारायणस्य मनः विकसितम् अकुर्वन् । क्रमेण तस्य स्वास्थ्ये अपि प्रगतिः दृष्टा । तदीयं मनः अपि शान्तम् अभवत् ।

एकस्मिन् दिने सः शिवम् आहूय – ''शिव ! भवतः कथायाम् अपूर्वा शक्तिः अस्ति । इदानीं भवान् यत्र वसति तस्मिन् ग्रामे भवतः परिवारः कोऽपि नास्ति । अतः भवान् अत्रैव तिष्ठतु । अहं भवतः वासाय योग्यां व्यवस्थां कल्पयामि । कथाः वदन् भवान् मां तोषयतु'' इति उक्तवान् ।

प्रतापनारायणस्य वचनानि शिवाय अपि अरोचन्त । भूस्वामिनः गृहे सर्वाः व्यवस्थाः आसन् । समीचीनं भोजनम् आसीत् । तेनैव सह धनिकस्य आदरः अपि आसीत् । अतः शिवः तत्रैव वासम् आरब्धवान् ।

शिवस्य कथाः शृण्वन् प्रतापनारायणः निश्चिन्तः सन् कालं यापयति स्म । किन्तु शारदापुरजनाः बहु दुःखिताः । तत्रत्याः केचन ग्रामप्रमुखाः निश्चितवन्तः यत् शिवः पुनः स्वग्रामम् आनेतव्यः इति । अतः ते प्रमुखान् चतुरः प्रतापनारायणसमीपं प्रेषितवन्तः ।

ते आगत्य प्रतापनारायणं न्यवेदयन् – ''शिवेन रहितः अस्मद्ग्रामः कान्तिहीनः सञ्जातः । बालाः भोजनादिषु अप्रवृत्ताः भवन्तः मातृः खेदयन्तः सन्ति । परिस्थितिः शोचनीया जाता अस्ति । कृपया शिवम् अस्माभिः सह प्रेषयतु'' इति ।

तदा प्रतापनारायणः तीक्ष्णस्वरेण – ''शिवः अत्र सुखेन अस्ति । केनापि कारणेन इतः तस्य गमनम् असम्भम् । तं भवन्तः विस्मरन्ति चेत् एव समीचिनम्'' इति उक्त्वा तान् ततः प्रेषितवान् ।

मासाः अतीताः । क्रमेण शिवस्य मनः

अपि असन्तृप्तं जातम् । प्रतापनारायणोऽपि पूर्ववत् कथासु लीनः न भवति स्म । सः चिन्तयति स्म यत् शिवस्य कथासु पूर्ववत् शक्तिः नास्ति इति । अतः तस्य मनः अपि कथासु संलग्नं न भवति स्म ।

कदाचित् शिवः प्रतापनारायणम् उक्तवान् – ''श्रीमन् ! भवति मम काचित् निवेदना अस्ति'' इति ।

''कामं वदतु'' इति प्रतापनारायणेन उक्तम् ।

'' मम मनः इदानीम् अशान्तम् अस्ति । पार्श्वग्रामे रामचन्द्रनामकः कश्चन तरुणः अस्ति । सः कथाकथने समर्थः इति मया श्रुतम् । तस्य कथाः श्रोतुम् इच्छा जाता अस्ति मयि । तेन वा शान्तिः प्राप्येत इति मम चिन्तनम्'' इति उक्तवान् शिवः ।

प्रतापनारायणः तस्य वचनं श्रुत्वा आश्चर्यान्वितः जातः । तेन उक्तम् – ''भवतः मनः किमर्थम् अशान्तम् अभवत् इति अहं जानामि । किन्तु तदर्थं भवता पार्श्वग्रामे स्थितस्य रामचन्द्रस्य कथाः श्रोतव्याः न सन्ति । भवान् स्वग्रामं गच्छतु । तत्रस्थः वायुः, जलम् इत्यादिकं भवति शान्तिम् उत्पादयन्ति । तत्रत्यान् बालान् कथाः उक्त्वा तृप्तिं प्राप्नोतु'' इति ।

तदा सन्तुष्टः शिवः उक्तवान् – ''भवता सत्यमेव उक्तम् । मम मनसः असन्तृप्तिः भवता ज्ञाता । एतत् वक्तुम् अहं सङ्कोचम् अनुभूतवान् । यदा मां नेतुं मम ग्रामीणाः आगताः तदारभ्य मम मनसि जाता एषा असन्तृप्तिः वर्धमाना एव अस्ति । मम किमपि वस्तु नष्टमिव अभासत । कथाः शृण्वतां बालानां हर्षध्वनिः मयि कामपि शक्तिम् उत्पादयति । स च अनुभवः सर्वदा अविस्मरणीयः । तत् सर्वम् इदानीमपि मम स्मृतिपटले अस्त्येव । बालानां तोषणं मम कर्तव्यम् अस्ति । अतः भवतः अनुमतिः यदि स्यात् तर्हि मया स्वग्रामः गम्यते'' इति ।

ततः प्रतापनारायणस्य मनः यदा अशान्तं भवति तदा सः स्वयमेव शिवस्य ग्रामं गत्वा तेन उच्यमानाः कथाः श्रुत्वा तृप्तः सन् प्रतिनिवर्तते स्म ।



GET YOUR COPY AT YOUR DOORSTEP FOR ONE YEAR FOR JUST RS. 120/-

## A TREASURE-TROVE FOR TALENTED TOTS



# Junior CHANDAMAMA

## THE ONE-STOP COMPLETE FUN AND ACTIVITY MAGAZINE.






- Games, puzzles, riddles, stories, colouring activity and more...



- Good habits grow when young. Check out articles and features in which values are taught subtly and let your child learn about Indian culture and heritage.

**PAGE AFTER PAGE WILL KINDLE YOUR CHILD'S IMAGINATION**

*Mail the form below along with the remittance to :* Subscription division, Chandamama India Limited, 82 Defence Officers' Colony, Ekkatuthangal, Chennai - 600 097.

---

## SUBSCRIPTION FORM

Please enrol me as a subscriber of Junior Chandamama. I give below the required particulars:

Name : .......................................... Address : ..........................................

..........................................................

..........................................................

PIN Code : ......................................

I am remitting the amount of Rs.120/- for 12 issues by Money Order/Demand Draft/ Cheque No...................... on...................................... Bank ........................................ branch drawn in favour of Chandamama India Ltd., encashable at Chennai (outstation cheque to include Rs.25/- towards Bank Commission).

Place : ....................

Date : ....................

Signature

शान्तिपुरस्य राजा शान्तिदेवः सेनापतिना वीरसिंहेन आयोजितं कुतन्त्रं ज्ञातवान् । अतः सः राज्ञीं सूचितवान् यत् भवती पुत्रेण सह गुप्तेन सुरङ्गमार्गेण निर्गच्छतु इति । सेनापतेः भटैः निपीडितः राजा शान्तिदेवः दुर्गभित्तेः पार्श्वे वहन्त्यां नद्याम् उत्पतितवान् । स्वामिना जयानन्देन एकः बालकः प्राप्तः ।

# आर्यः

## राजकुमारस्य अज्ञातं रहस्यम्

चित्रम् - गान्धि अय्यः




देवि ! कृपया एतस्य राङ्कवस्य उपरि स्थापयतु शिरः ।


आर्य ! भवता अहं पुत्रीत्वेन निर्दिष्टा । कञ्चित्-कालं यावत् एतत् एव अभिज्ञानं भवतु मम ।


कृपया मम पुत्रस्य रक्षणं क्रियताम् । प्रायः अहं जीविता न भवेयम् ।


स्वामिनः प्रत्युत्तर-कथनात् पूर्वम् एव सा एकवारं पुनः पुत्रं पश्यति । तस्याः नेत्रे निमीलिते भवतः ।
गुरुवर्य ! एतस्याः इहलोकव्यापारः समाप्तः ।
आं मुकुन्द ! तया शरीरत्यागः कृतः अस्ति ।


मुकुन्द, स्नानं कृत्वा आगमिष्यामि । मृतं शरीरं परितः आत्मशक्तिः तिष्ठति । अहं तेन आत्मना सह सम्भाषणं करोमि । भवान् एतं बालं स्वीकरोतु । एषः मृत-शरीरस्य समीपं यथा न गच्छेत् तथा जागरूकता भवतु ।


जयानन्दः जलप्रपातस्य समीपं गच्छति । स्नानानन्तरं ध्यानमग्नः भवति सः । अन्तर्दृष्ट्या सः काञ्चित् स्त्रियं पश्यति ।


अहं शान्तकुमारी अस्मि । शान्तिपुरस्य राज्ञी अस्मि ।


स्वामी मुकुन्दसमीपं प्रत्यागच्छति । तावता मुकुन्दसमीपे अपरः शिष्यः उपस्थितः आसीत् ।
गोविन्द ! शान्तिपुरात् कदा प्रत्यागतं भवता ?


अहं राजधानीतः शीघ्रं प्रत्यागतः गुरुदेव । राजकुमारस्य जन्मदिनोत्सवस्य आचरणं विद्रोहस्य कारणतः स्थगितं जातम् । राजा आक्रमणग्रस्तः अस्ति । राजकुमारसहिता राज्ञी अदृश्यतां गता अस्ति ।


अदृश्यतां गता ? एवं तर्हि एषः बालकः एव राजकुमारः, सा स्त्री च राज्ञी स्यात् ।

मुकुन्द ! भवतः ऊहा युक्ता । तौ कथम् अत्र आगतौ इति तु न ज्ञायते । राज्ञी शान्तकुमारी इच्छति यत् शवस्य निखननात् पूर्वं मम पुत्रः मच्छरीरस्य उपरि पुष्पं स्थापयतु इति ।

गुरुवर्य ! मया श्रुतं यत् राजा दुर्गभित्तेः पार्श्वे प्रवहन्त्यां नद्याम् उत्कूर्दितवान् इति । अन्ये केचन वदन्ति यत् सेना-पतिः तं निहतवान् इति ।

अयि शिष्यौ ! राजकुमारस्य रक्षणस्य हेतोः वयम् आत्मना ज्ञातं रहस्यं स्वसमीपे एव रक्षेम । राजा सजीवम् आगच्छेत् कदाचित् । भविष्यं को वा जानाति ?

गुरुवर्य ! किम् इदानीम् एतस्य शवस्य संस्कारं करवाम ?

तत् श्वः करिष्यामः वयम् । अद्य रात्रौ रक्षणं कर्तुं व्याघ्रं व्याघ्रीं च नियोजयिष्यामि ।

अनुवर्तते

# सत्यस्वराज्ययोः विषये बद्धादरता

कक्ष्यायां महान् कोलाहलः प्रचलति स्म । यदा अध्यापकः कक्ष्याम् आगतः तदा तत्र सर्वत्र कलायस्य शिम्बाः पतिताः आसन् । एतत् दृष्ट्वा नितरां क्रुद्धः अध्यापकः अज्ञापितवान् – ''ये ये कलायं खादितवन्तः ते एताः शिम्बाः बहिः क्षिपन्तु'' इति ।

तदा सर्वे शिम्बानां सङ्ग्रहणे निमग्नाः, ऋते एकस्मात् बालकात् । एतत् दृष्ट्वा अध्यापकः कोपेन अपृच्छत् – ''किं साहाय्यदानाय भवते विशेषनिमन्त्रणम् आवश्यकम् ?'' इति ।

तदा बालकः उत्थाय अवदत् – ''मया कलायाः न खादिताः । अतः अहं शिम्बानां क्षेपणे उद्युक्तः न जातः'' इति ।

एतत् श्रुत्वा सर्वे छात्राः ऐककण्ठ्येन उक्तवन्तः – ''एतत् असत्यं श्रीमन् ! एषः अपि कलायं खादितवान् अस्ति'' इति ।

सर्वेषु बालेषु दोषम् आरोपयत्सु अपि सः बालकः तु स्वस्य निरपराधितायाः विषये दृढचित्तः आसीत् । तस्मात् क्रुद्धः अध्यापकः – ''कक्ष्यीयाः सर्वे असत्यं वदन्ति इति वा भवतः आशयः ? किं भवान् एकः एव वा सत्यवक्ता?'' इति पृष्ट्वा वेत्रदण्डं स्वीकृत्य हस्ते बहुधा ताडितवान् । बालकः एतत् दण्डनं विना विरोधं स्वीकृतवान्, स्वस्य पुस्तकानि उन्नीय गृहं प्रति प्रस्थितवान् च । एतत् अन्ये सर्वे छात्राः आश्चर्येण दृष्टवन्तः ।

एतदनन्तरं सः अध्यापकः तस्य बालस्य गृहं गत्वा तस्य पितरं प्रवृत्तं सर्वम् उक्तवान् । अध्यापकस्य चिन्तनम् आसीत् यत् पिता पुत्रं तर्जयन् ताडयेत् इति । किन्तु तथा अकुर्वन् पिता अध्यापकम् अवदत् – ''एषः कक्ष्यायां कलायं न खादितवान् । अतः तदेव कक्ष्यायां सधैर्यम् उक्तवान् । एषः कदापि असत्यं न वदति'' इति ।

एतत् श्रुत्वा अध्यापकः तौ पितापुत्रौ आश्चर्येण निर्निमेषं पश्यन् स्थितवान् ।

बालकस्य एषा दृढचित्तता एव अग्रे आङ्ग्लानां विरोधेन स्थितौ, 'स्वराज्यम् अस्माकं जन्मसिद्धः अधिकारः, तत् वयं प्राप्स्यामः एव' इति घोषणे च कारणं जातम् । सः बालकः आसीत् बालगङ्गाधरतिलकः, यश्च अग्रे स्वातन्त्र्यवीरत्वेन ख्यातः जातः ।



# कालोऽयं विनोदस्य



## वर्णैः अलङ्क्रियताम्

एतौ सुहृदौ आनन्दस्य पराकाष्ठां प्राप्तवन्तौ स्तः । तस्मिन् आनन्दे भवताम् अपि सहभागः किं न स्यात् ? वर्णैः अलङ्कृत्य एतस्य चित्रस्य शोभा वर्ध्यताम् ।

## किं तदिति ऊह्यताम्

भोलः आत्मना गृहीतं जीविनं गृहं नयन् अस्ति । पार्श्वस्थेषु त्रिषु चित्रखण्डेषु योग्यं चित्वा चतुरस्रस्थाने स्थापयित्वा वस्त्रबन्धे कः अस्ति इति ऊह्यताम् । अवधानपूर्वकं पश्यन्तः भोलस्य स्यूते स्थितम् अभिजानन्तु भवन्तः ।









## भेदांशाः के ?

उभयम् अपि चित्रम् अवधानपूर्वकं परिशील्य चित्रयोः भेदांशान् अभिजानन्तु भवन्तः ।

(उत्तराणि ६६ तमे पृष्ठे)

## मार्गः दर्श्यताम्

भल्लूकराय: मधुपात्रं प्राप्तुम् इच्छति ।
मार्गः दर्श्यतां तस्मै ।







# चित्रशीर्षिकास्पर्धा



अधस्तनं चित्रद्वयं दृष्ट्वा परस्पर-
सम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं
भवन्तः प्रेषयितुं शक्नुयुः ?



MAHANTESH C. MORABAD



K.S. SIVARKKAMANI

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८.उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यन्ते ।

पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'अक्टोबर्'मासस्य चित्रशीर्षिकाप्रेषकः -**

**च.वें. शेषाचार्यः**
२.२२.३११/१७, *वेस्टर्न् हिल्स्, कुकटपल्ली,*
**हैदराबाद - ५०० ०७२**

**पुरस्कृता शीर्षिका**





**अनियन्त्रितमुग्धमन्दहासौ तौ ।**
**अर्धव्यञ्जितहर्षो दर्शनीयोऽसौ ॥**

## मनोविनोदस्य उत्तराणि (पृ. ६३-६४)

**भेदांशाः के ? -** १. पक्षिणः शिरसि केशाः अल्पाः । २. पक्षी एकम् एव पादं वहति । ३. महामक्षिकायाः एकः पक्षः न दृश्यते । ४. लघुमक्षिकायाः एकः पक्षः न दृश्यते । ५. चमसे मधु न दृश्यते । ६. द्रोण्याः वर्णाः विभिन्नाः । ७. पुष्पस्य कश्चन दलभागः न दृश्यते । ८. महामक्षिकायाः उरोभागे किञ्चन चिह्नं न दृश्यते ।

**भोलेन नीयमानः -** हरिणः । हरिणस्य पुच्छं न भवति ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

